ॐ वेदान्तवनसञ्चारी नीलाचलगु(हाशयं) ।
(ज्यो)तिर्विराजते ध्वस्तमायावरणवारणम् ॥

किं न त्वं (नरसिंह) एवमधिपा नाहं न नो चेत्कथं
बन्धो मय्यपि तेश्वरे त्व(यि) विभो किंवा(स्ति मत्तः परः) ।
भूमादर्शनदा(त्म)बन्धहर इत्याद्यं (वचः पौरुषं)
(न)त्वं नातदहं त्व(मेव नृ)हरे भूयासमात्मंस्त्वयि ॥

हृदयालयमा(लंब्य) करुणारससुन्दरम् ।
गुरूणां चरणांभोजं कुर्वे भेदस्य धिक्कृतिं ॥

अन्तःकरणातिरि(क्तोऽहमि)ति प्रतीयमानो भेदः पर-
स्मान्न भिद्यते ॥

End:

तस्मात्तत्त्वमसीत्यादिसत्यज्ञानसुखात्मनः ।
जीवो ब्रह्मेति संसिद्धं ज्योतिश्चैतन्यमस्तु मे ॥

आस्तामन्यप्रमाणत्वमभेदेनैव वस्तुनः ।
भेदे प्रमाणमित्येतत् अद्वैतं साधयेत्स्फुटम् ॥

गुरुचरणसकाशात् हृद्गतं सर्वगं त-
द्गुणमननुगुणं वा वीक्षतां तत्क्षमात्मा ।
(अपि विसृजति) कश्चित् का च मालावमत्या
शतमखमणिमालां शारदाकाशनीलाम् ॥

Colophon:

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीजगन्नाथाश्रमिपूज्यपादशि-

श्यश्रीनृसिंहाश्रमिविरचितो भेदधिक्कारः समाप्तः ॥

Subject: Bhedadhikkāra—a refutation of the dualistic view of the universe as held by the Naiyāyika and other schools.

Remarks:—The Ms. is in decaying condition.

This work of Śrī Nṛsimhāśramin has been edited in the Benares Sanskṛt Series Nos. 86 and 92. (1904) by Pandit Lakṣmaṇa Śastri Drāvida. The edition contains also the commentary of Nārāyaṇāśramin.

---

## ॥ भेदधिक्कारः ॥

## 7509. BHEDADHIKKĀRAḤ.

S. S. Collection No. 90 b.

Substance—Palm leaf. Size—14¼ × 1¾ inches. Leaves—9. Lines—10 to a Page. Script—Telugu. No. of Granthas—300. Author—Nṛsimhāśrama. Incomplete. Printed.

Beginning and colophon—Same as No. 7508.

**End:**

तस्मान्न भेदः सिध्यति । ननु घटत्वविशिष्टप्रतियोगिके न वान्योन्याभावः । न चैवं विरोधाचस्य प्रतियोगिसामानाधिकरण्यमिति वाच्यम् । अन्योन्याभावस्य प्रतियोग्यविरोधात् । न च प्रतियो... ।

Subject: Bhedadhikkāra; wants end.

**Remarks:**—The Ms. is in good condition.

The other work contained herein is Madhvavidhvamsa.

---

॥ भेदधिक्कारः ॥

## 7510. BHEDADHIKKĀRAH.

J. L. Collection No. 979 a.

**Substance**—Paper. **Size**—10¾ × 4 **inches.** **Sheets**—16 (1-16). **Lines**—11 to a Page. Script—Devanāgarī. No. of Granthas—450. Author—Nṛsimhāśramin. Complete. Printed,

Beginning, end, colophon and subject—Same as No. 7508.

Remarks:—The Ms. is in good condition. The other work contained herein is Bhedadhikkārasatkriyā.

---

॥ भेदधिक्कारव्याख्या—सत्क्रिया ॥

## 7511. BHEDADHIKKĀRAVYĀKHYĀ—SATKRIYĀ.

**Burnell's Catalogue No.** 9791. **Page** 89. Left column.

**Substance**—Palm leaf. **Size**—18½ × 1⅛ **inches.** Leaves—86, Lines—5 to a Page. Script—Telugu. No. of Granthas—2000. Author—Nārāyaṇāśramin. Complete. Printed.

**Beginning:**

मृषामायाशक्त्यान्(ऽबृ)तमहिम(नि)ब्रह्म(णि)परे

जगज्जालं जातं स्फुरति वियतीवेन्द्रनगरम् ।

विरिञ्चिश्रीशेशत्रिदशनरतिर्यग्गताभिदा

कुतोऽतो भूमाऽहं निरवधिसदानन्द(घन)चित् ॥

(काशते कलितं य)स्य पदं वै दिनमसौक्तिकैः(दिक्मस्तकैः) ।

भक्तमुक्त्यै समिहितं (समीहन्तं) तं नृसिंहगुरुं भजे ॥

गंभीरभावभारेण दुर्वहा गौरवीकृते (गौरवीकृतिः) ।

तथापि खेदाधिकारव्याक्रियामन्थमारभे ॥

 

ईश्वरतदनुस्मरणं मंगलं मनसाऽनुष्ठितं शिष्यशिक्षार्थं प्रकटयन् प्रकरणविषयादिकं च सूचयन् प्रस्तुतवस्तुस्व- रूपं सलक्षणप्रमाणं निर्दिशति । वेदान्तेत्यादिना ।

End :

अपीति । स्वच्छामिन्द्रनीलमणिमालां कश्चिद्विचार्य काचमणिमाला भ्रान्त्या त्यजत्यपि नैतावता प्राज्ञैरुपेक्ष्य- त इत्यर्थः । हरिः ओम् ।

वेदान्तवृन्दाविपिने विततं विशुद्ध-

मद्वैतमार्गमपवर्गपथाधिरोहम् ।

श्रीमद्गुरूक्तनयनुन्नसमस्तशङ्क

आस्थाय यान्तु पदमुत्तममस्तदोषाः ॥

**Colophon :**

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवन्नृसिंहाश्रमश्रीचरणप-

रिचरणनिरतनारायणाश्रमविरचिता भेदधिक्कारसत्क्रिया समाप्ता ।

**Subject:** Bhedadhikkāravyākhyāsatkriyā a commentary on Bhedadhikkāra of Nṛsimhāśramin.

**Remarks:**—The Ms. is in a fairly good condition.

This commentary on Bhedadhikkāra called 'Bhedadhikkāra satkriyā is by Śrī Nārāyaṇāśramin, the pupil of Śrī Nṛsimhāśramin, the author of the Bhedadhikkāra.

The work has been edited in the Benares Sanskṛt Series Nos. 86 & 92 (1904) along with the Bhedadhikkāra.

---

## ॥ भेदधिक्कारव्याख्या—सत्क्रिया ॥

## 7512. BHEDADHIKKĀRAVYĀKHYĀ—SATKRIYĀ.

**Burnell's Catalogue No. 9899 a. Page 95. Right column.** Substance—Palm leaf. Size—19×1½ inches. Leaves —21 (6-26). Lines—14 to a Page. Script—Telugu. No. of Granthas—2000. Author—Nārāyaṇāśramin. Incomplete. Printed.

**Beginning—Same as No. 7511.**

**End:**

तदभेदप्रतियोगिनाप्येतद्भेदप्रतिभासे स्वमतेनोदाहरणमाह— जीवेश्वरयोरेवेति भेदस्योभयाश्रितत्वे...त्वयोभिः... इति कथमेकस्य तदवधित्वेन प्रतिभान इत्याशङ्क्य... ।

**Colophon:** Nil.

Subject: Bhedadhikkāravyākhyā known as Bhedadhikkāra Satkriyā

Remarks:—The Ms. is in a fairly good condition. The other work contained herein is 'Harimīḍe' Stotra.

Dr. Burnell has wrongly described this work as Vedāntaprakaraṇavākhyāmṛtam. The readings in this Ms. agree with that of the printed edition in the Benares Sanskṛt Series. The margins give the names of the various Prakaraṇas of the work.

---

## ॥ भेदधिक्कारव्याख्या--सत्क्रिया ॥

## 7513. BHEDADHIKKĀRAVYĀKHYĀ—SATKRIYĀ.

J. L. Collection No. 980.

Substance—Paper. Size—10¾ × 4 inches. Sheets—73 (17-89). Lines—11 to a Page. Script—Devanāgarī. No. of Granthas—2000. Author—Nārāyaṇāśramin. Complete. Printed.

Beginning, end, colophon and subject—Same as No. 7511.

Remarks:—The Ms. is in good condition. The other work contained herein is Bhedadhikkāra.

---

## ॥ भेदधिक्काराटिप्पणी ॥

## 7514. BHEDADHIKKĀRAṬIPPAṆĪ.

Burnell's Catalogue No. 9793. Page 89. Left column.

Substance—Palm leaf. Size—15½ × 1 inches. Leaves—

164 (2–165). Lines—5 to a Page. Script—Grantha. No. of Granthas—2500. Author—? Incomplete. Not printed.

Beginning:

.. ति वाच्यां सर्वगतप्रसृतश्चैतन्यैकदेश * *

आह भगवदनुग्रहादिति । मूले स्वर्गादित्यादिपदेन पितृ-
लोकसंग्रहः । यथाऽधानस्येति । न च तद्वत्स्वतन्त्रफल-
साधनत्वमपि न स्यादिति वाच्यम् । तत्र स्वतन्त्रफलश्रुतेः ।
अत्र तु कर्मणा पितृलोक इति फलश्रुतेरिति भावः ।

End:

ततो वर्णितं नित्यैवे —— श्रुत्यर्थोऽभिमत इति मन्त-
व्यम् । याभिकृत्वेति । यश्चाद्यस्येति वाक्यस्य ब्रह्मा
इन्द्रियादितादा ... मायाकृत इत्येवमर्थकत्वादिति भावः ।
बाधेति । मुखादिप्रतिबिंबप्रतियोगिकभेदस्याविद्याप्रति-
बिंबात्मनः सत्त्वादित्यर्थः । न च तत्प्रति...... ।

Subject: Bhedadhikkāravyākhyā known as Bhedadhikkāraṭippaṇī.

Remarks:—The Ms. is in a decaying condition.

The author of this Ṭippaṇī on the Bhedadhikkāra of Nṛsimhāśramin, is not known.

---

॥ भेदाधिक्कारोपन्यासः ॥

## 7515. BHEDADHIKKĀROPANYĀSAḤ.

Not Noticed by Dr. Burnell.

Substance—Palm leaf. Size—16¾ × 1½ inches. Leaves—71. Lines—7 to a Page. Script—Grantha. No. of Granthas—2000. Author—? Incomplete. Not printed.

Beginning:

ओम् ।

सर्वार्थस्य (तु) साक्ष्यात्मा सदानन्दः स्वयंप्रभः ।
असङ्गश्चिदहं देहत्रयतद्धर्मवर्जितः ॥

सत्यं ज्ञानमनन्तं सच्छुद्धं सूक्ष्मं स्वतन्त्रमोम् ।
परमानन्दरूपं ब्रह्माहमस्मि न संशयः ॥

उपादानकर्त्रात्मकं सर्वसर्गे
महामायया ऽविद्यया द्ः(?) प्रकृत्या ।
सुसर्वज्ञमद्वैतमाम्नायमूलं
नृसिंहं गुरुं मृत्युमृत्युं नमामि ॥

श्रीमद्व्यासं वासुदेवावतारं
वेदाचार्यं ब्रह्मशारीरकस्य ।
मीमांसायाः सूत्रकर्तारमीडे
शुद्धाद्वैतस्थापकाचार्यवर्यम् ॥

* *

द्वैतिगजपुञ्जकविभञ्जनधुरीणं
प्रत्यगभिधैकपरसन्मणिजिघृक्षम् ।
श्रौतनयवृन्दनखरायुधविशेषं
योगिवरमाश्रमिनृसिंहमहमीडे ॥

आमेरोरा च सेतोस्सकलबुधगणैश्शुद्धनामार्थभावात्

भूमेश्शानन्दभावान्निजजनभवसन्तारणाच्च प्रसिद्धः ।

यः श्रद्धानन्दतीर्थस्त्विति महितगिरा ख्यायते श्रीगुरुं तं

शुद्धाचारवेदत्रयसकलनयज्ञानकन्दं नमामि ॥

यत्सान्निध्यात्सर्वविद्यास्सुलब्धा

अस्माभिर्ये भूमसौख्यैकनिष्ठाः ।

येषां दृष्टेर्गोचरास्सर्वलोकाः

मुक्तास्तानानन्दकृष्णान् नमामि ॥

यद्यपि श्रुतिस्मृतीतिहासपुराणागमैः पुनः पुनरतिश्र-येन जगन्निदाने सर्वज्ञे परमात्मनि सजातीयविजातीयस्व-गतसमस्तभेदो निन्दितो निषिद्धश्च । * *

अतस्तन्मोहशान्तये समस्तभेदधर्मदुर्निरूपत्वप्रकटनाय भेदधिक्कारोपन्यासाख्योऽयं ग्रन्थः आरभ्यते ।

* *

तथापि न्यायमेव बहुमन्यमानं प्रति न्यायतस्तावज्जीव-परभेदमिथ्यात्वं साध्यते ।

End :

अस्तु तावत्सुखादिविषयकत्वं चैतन्यस्य स्वभावविशे-षः । न चैवं सदा तत्कार्यापत्तिः । सुखदुःखविशिष्टानुभव-त्वेनैव सुखप्रसादविषादकारणतया भवविशेषणयोः सुख-दुःखयोरपि तत्कारणत्वात्तयोश्च सदाऽभावात् । न चैवमध्ये-

तत्— कालावच्छेदेन जन्मान्तरीयसुखविषयकसंशयो न स्यादिति वाच्यम् । जीवसाक्षिण... ।

Subject: Bhedadhikkāropanyāsa.

Remarks :—The Ms. is in a fairly good condition.

This anonymous work is a discourse-like commentary on the Bhedadhikkāra of Nṛsimhāśramin.

The author seems to be a disciple of Nṛsimhāśramin and two others named Śraddhānandatīrtha and Ānandakṛṣṇa.

Dr. Burnell has not noticed this work.

---

॥ वेदान्तवादार्थः ॥

## 7516. VEDĀNTAVĀDĀRTHAḤ.

**Burnell's Catalogue** No. 9844. Page 94. Right column. **Substance**—Palm leaf. **Size**—$18\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves —6. Lines—9 to a Page. Script—Grantha. No. of Granthas—200. Author—Kṛṣṇānanda Incomplete. Not printed.

**Beginning:**

जडीकृतजगत्यन्तस्तमस्संभेदमर्मणे ।
रामभद्रयतीन्द्राय महते महसे नमः ॥
श्रीपरिव्राज्यसाम्राज्यलक्ष्मीलालितमूर्तये ।
वासुदेवयतीन्द्राय गुरवे करवै नमः ॥

इह तावदाब्रह्मकीटाकपृष्ठाखिलक्लेशानतिशयानन्दयाव-

मभिलषितं । सोऽयमभिलाषो मुमुक्षेति गीयते । सा तु
विवेकविरागशमाद्यनुप्राणिता मोक्षसाधनगवेषणाहेतुः ।

End:

महाफला हि गुरुभक्तिः ।

"यस्य देवे परा भक्तिः यथा देवे तथा गुरौ ।

तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥"

इति श्रुतिः । तस्माद्विद्यार्थिनां देववदाचार्यमुपासीनेन
तस्मिन् परमा भक्तिः कार्येति तात्पर्यमिति शिवम् ॥

Colophon: Nil.

Subject: Vedāntavādārthaḥ.

Remarks:—The Ms. is in a fairly good condition. The author mentions Rāmabhadra and Vāsudevayati as his Gurus and so might also be Kṛṣṇānanda the author of Siddhāntasiddhāñjanam.

After the colophon are given the following:—

रुक्मिणी प्रथमाश्लेषे रहो द्यूतग्रहे जिताम् ।
हरिर्व्रीडस्मिताकूतामालिङ्गन्मङ्गलं क्रियात् ॥

स्वाज्ञानोद्भूतभूतप्रमुखबहुमुखद्वैतदेहद्वयोद्यं
मातृत्यादिप्रपञ्चप्रचयपरिचयप्राप्तसंसारयन्त्रम् ।
नेत्यभ्यासप्रसूतप्रबलमतिबलध्वस्तमोहप्रभाव-
प्रोत्स(?)प्रत्यक्षसाक्षिद्युतिकथमकथन्धाम कामं प्रपद्ये ॥ १ ॥

बद्धाञ्ज्याम्बुजजातजातमधुरप्रेयोमधुप्रार्थना
सा तु व्यग्रधियाः ससम्भ्रमकृतस्स्वर्गेऽपि निर्वेदिनः ।

यस्मिन्मुक्तिपथः प्रतीतमुनिभिः संप्रार्थितस्सन् बभौ
तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिधां बिभ्रते ॥ २ ॥

श्रीकृष्णानन्दयोगीन्द्रचरणांबुरुहद्वयम् ।
धर्मार्थकाममोक्षाणां निदानं नित्यमाश्रये ॥ ३ ॥

---

## ॥ वेदान्तवादार्थः ॥

## 7517. VEDĀNTAVĀDĀRTHAḤ.

Burnell's Catalogue No. 9845. Page 94. Right column. Substance—Palm leaf. Size—18¼ × 1¼ inches. Leaves—25. Lines—9 to a Page. Script—Grantha. No. of Granthas—1000. Author—Kṛṣṇānanda ?. Incomplete. Not printed.

**Beginning:**

भाष्याः आपातदर्शनभिन्नं प्रति वाक्यमयमस्य वाक्यार्थ इति नानेकशाखास्थवाक्यार्थग्रहणं श्रवणं तथाज्ञानमात्रविरोधिनं तु मननवत्संशयविरोधिमननं तु अयमेव वाक्यार्थोऽन्ययुक्तो नान्य इति निर्णयहेतुयुक्त्यनुसन्धानं निरन्तरध्यानं निदिध्यासनमित्थमेव श्रवणादीनां भेदः । विचारादिविधिस्त्वपूर्वविधिरिति ।

**End:**

तस्मात् नित्यसिद्धसत्यात्मस्वरूपैव मुक्तिरिति सिद्धम् ॥

**Colophon:** Nil.

Subject: Vedāntavādārtha; a treatise on Advaitavedānta principles; critises the views of other schools.

Remarks:—The Ms is in a fairly good condition.

---

## ॥ वेदान्तवादार्थः ॥

## 7518. VEDĀNTAVĀDĀRTHAḤ.

Burnell's Catalogue No. 9846. Page 94. Right column. Substance—Palm leaf. Size—16×1¼ inches. Leaves—27. Lines—7 to a Page. Script—Telugu. No. of Granthas—750. Author—Kṛṣṇānanda. Incomplete. Not printed.

Beginning:

तत्र तावत् "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यधीतसाङ्गस्वाध्यायस्य वेदान्तैरापातप्रतिपन्नैः ब्रह्मणि समुदितजिज्ञासस्य तज्ज्ञानाय वेदान्तश्रवणे विधिः प्रतीयमानः किं विध इति चिन्त्यते ।

End:

परमेश्वर इति सुषुप्त्युत्क्रान्त्यधिकरणनिर्णयोऽपि साक्षिपर इत्येव निर्णीतम् । सत्वशुद्धावपि……दिग्भ्रमस्थले वस्तुतः शुक्तिको हंकुरगतोऽपीदमंशः प्रतिभासः । ……रजते…. …. ।

Subject: Vedāntavādārthaḥ.

Remarks:—The Ms. is in a fairly good condition.

---

## ॥ सिद्धान्तसिद्धाञ्जनम् ॥

## 7519. SIDDHĀNTASIDDHĀÑJANAM.

**Burnell's Catalogue** No. 9849. Page 95. Left column. Substance—Palm leaf. Size—$16\frac{1}{2} \times 1\frac{1}{4}$ inches. Leaves—349 Lines—6 to 9 to a Page. Script—Grantha. No. of Granthas—11000. Author—Kṛṣṇānandayati. Incomplete. Printed.

Beginning:

जगज्जन्मस्थेमाप्ययनियममीमादिमगुरुः

विचेयो योगेनानिदमुदयवाचामवाधिषु ।

प्रकाशानन्दात्मा परिमुषितनिःशेषकलुषः

त्रिभेदातीतो धीनटनचटुसाक्षी विजयते ॥ १ ॥

* *

इह खलु तावदतीतानेकभवपरम्परासमार्जितसुकृतसम्पदावर्जितभगवदनुग्रहासादितसत्त्वप्रसादतया सम्यग्विवेकवैराग्यादिसाधनो * * आत्मतत्त्वज्ञानमाधिगम्य जिज्ञासते ॥

End:

न चाहं बुद्धिरित्येव तथा अस्यमर्थविवेकस्तथापि प्रकृतिपरिणामस्याप्यहमित्येव भानात् किन्तु दृश्यव्यतिरेक ......एवञ्चाहंकारादिसर्वदृश्यावभासा दृशिरेव प्रतीची व्युदपादीति न तदभावप्रसङ्गः ! अत एव च नैकत्र-

प्रत्यगर्थद्वयापाचिः । अपि च... ।

Colophon: Nil.

Subject: Siddhāntasiddhāñjanam; A criticism of the Viśiṣṭādhvaita System of Rāmānuja; wants end.

Remarks:—The Ms. is in a fairly good condition. There are four loose leaves at the beginning dealing with some grammatical discussion etc.

The author of this work, Śri Kṛṣṇānandasarasvati lived in the 17th century.

The author had two pupils named Rāmānandayati and Bhāskaradīkṣita.

The Siddhāntasiddhāñjana has a commentary called Ratnatūlikā, written by the author's pupil, Bhāskaradīkṣita.

This work has been published in 4 vols. (Nos. 47, 48, 58 & 61) in the Trivandrum Sanskrit Series. For details about the author's date etc. see introduction to the above edition by Mahāmahopādhyāya T. Ganapati Sastri.

---

॥ तप्तमुद्राविद्रावणम् ॥

## 7520. TAPTAMUDRĀVIDRĀVAṆAM.

Burnell's Catalogue No. 9763. Page 98. Right column.

Substance—Palm leaf. Size—$15\frac{1}{4} \times 1\frac{1}{4}$ inches. Leaves—58. Lines—5 to a Page. Script—Grantha. No. of Granthas—2000. Author—Bhāskaradīkṣita. Complete. Not printed.

Beginning:

ओं साम्बशिवाय नमः ॥

मार्ताण्डतिलकस्वामिमहागणपतीन्वयम् ।
विश्ववन्द्याश्रमस्यामः सर्वसिद्धिविधायिनः ॥
ब्रह्मविष्णुमहेशानां कारणं परमेश्वरम् ।
साम्बन्नौमि शिवादिस्थं मायाकल्पितविग्रहम् ॥
क्लेशकर्मविपाकाद्यैरपरामृष्टमीश्वरम् ।
गुरूणाञ्च गुरुं वन्दे विष्णुमोङ्कारशब्दितम् ॥
उमामहेश्वरं नौमि मद्धामसविधालयम् ।
यत्पदाम्भोरुहस्मृत्या स्फुरन्ति सकलाः कलाः ॥
उमामहेश्वराचार्यांश्चोलावनिशिखमणीन् ।
तातपादानहन्नौमि सर्वतन्त्रप्रवर्तकान् ॥
उमामहेश्वराचार्यतनुजो भास्कराध्वरी ।
अस्ति कोनेरिराजेन्द्रपुरवासी बुधोत्तमः ॥
वैतानकर्मनिवहे विहितैकभावा-
मव्याजवाचमपि ये परपूरुषस्य ।
तन्त्रोत्सुकां विदधते स हि तत्समुद्रा-
विद्रावणं वितनुते विनयाय तेषाम् ॥

इह खलु केचिद्विष्णुभागवता युक्त्याभाससमाश्रया-
स्सन्तः कानि चिद्वेदवाक्यानि तत्समुद्राधारणविषयतया
योजयन्तः प्राकृतजनान्व्यामोहयन्ति । तन्निरासप्रकारं
सोपपत्तिकमिह संक्षेपेण प्रदर्शयामः । ते खल्वेवमाहुः—

यद्यपि तप्तचक्रधारणं धर्म्यमित्यत्र न प्रत्यक्षं प्रमाणं धर्मस्य प्रत्यक्षागोचरत्वात्, नाप्यनुमानं श्रुत्यनुपजीविनोऽनुमानस्य धर्मप्रमाणत्वायोगात्, तथापि 'पवित्रन्ते विततं ब्रह्मणस्पते ......... ।

End:

श्रीभगवद्गीतायामपि तथा शास्त्रमप्रमाणहेतु कार्याकार्ययोः 'ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि' इति शास्त्रोपजीवनेनैव सर्वेषामाचाराणामनुष्ठेयत्वप्रतिपादनाच्च वेदोक्तकर्म एव कार्येति सिद्धम् ॥

Colophon:

श्रीमदुमामहेश्वराचार्यतनूजभास्करदीक्षितकृतौ तप्तमुद्राविद्रावणे द्वितीयः परिच्छेदः ॥

तप्तमुद्राविद्रावणं समाप्तम् ॥

Leaf No. 67.

इति + विद्रावणे चरणमन्त्रस्य मुद्राधारणपरत्वानिरासप्रकारस्सम्पूर्णः ।

Leaf No. 80.

इति + विद्रावणे सर्वमन्त्राणां तप्तमुद्राधारणविधायकत्वनिरासप्रकारः सम्पूर्णः ॥

Leaf No. 114.

इति श्री + प्रथमः परिच्छेदः ॥

**Subject:** Taptamudrāvidrāvaṇa, A treatise criticising the practice of branding the sectarian mark on both the shoulders with Śaṅkha and Cakra adopted by Vaiṣṇavas and Mādhvas.

**Remarks**:—The Ms. is in a fairly good condition. Dr. Burnell has wrongly attributed this work to Śrī Appayya Dīkṣita.

---

॥ तप्तमुद्राविद्रावणम् ॥

## 7521. TAPTAMUDRĀVIDRĀVAṆAM.

Burnell's Catalogue No. 6597. Page 93. Right column. Substance—Paper. Size—16 × 6¾ inches. Sheets—25. Lines—18 to a page. Script—Devanāgarī. No. of Granthas—1000. Author—Bhāskaradīkṣita. Incomplete. Not printed.

**Beginning**:

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः ॥

तप्तचक्रलाञ्छनस्यावैदिकत्वं प्रतिपाद्यते । तत्र तप्तमुद्राधारिण इत्थं श्रुतिं प्रमाणयन्ति । 'पवित्रं ते विततं ब्रह्मणस्पते । प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते । शृतास इद्वहन्तस्तत्समाशत । चरणं पवित्रं विततं पुराणं । येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूताः । अतिपाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रं । ज्योतिष्मद्भ्राजमानं महस्वत् ।

अमृतस्य धारा बहुधा दोहमानं । चरणं नो लोके सुधितां दधातु । चमूषच्छ्येनः शकुनो बिभ्रत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् । अपा मूर्मिं सचमानस्समुद्रं तुरीयं धाम महिषो विवक्तीति' ॥

End :

ननु चक्राङ्कस्य शिष्टधार्यत्वमनुमानैस्सिध्यते । तथाहि चक्रं शिष्टैर्धार्यं पवित्रशब्दवाच्यत्वं स्यात्तदा भारतभागवतवैजयन्तिकारेण पवित्रशब्दस्य चक्रे वृत्तिः प्रदर्श्येत प्रत्युत चक्रादिव्यतिरिक्तेषु वृत्तिर्दर्शिता । किञ्च इदानीमुक्तानुमानमेव पवित्रशब्दवाच्यशूलधारणस्य साधकं स्यात्सत्प्रतिपक्षश्च अङ्कनं दुष्टैर्धार्यमङ्कनत्वात् । पराशरपुराणे—

अतीव पतितानां हि श्वापदाद्यङ्कनं नृणाम् ।
विधीयते तु शुद्धानामतः शुद्धं न चाङ्कयेत् ॥ इति ॥

तस्माद्वैदिकैस्तप्तमुद्रा न धार्येति सिद्धम् ॥

Colophon :

श्रीरामाय नमः । तप्तमुद्राविद्रावणं समाप्तं । श्रीकृष्णार्पणमस्तु ॥

(Leaf No. 10)

इति चरणमन्त्रस्य तप्तमुद्राधारणात्वभङ्गः ॥

Subject : Same as No. 7521.

**Remarks :** —The Ms. is in good condition. The Ms. wants the introductory verses and a few sentences at the beginning.

---

॥ तप्तमुद्राविद्रावणम् ॥

## 7522. TAPTAMUDRĀVIDRĀVAṆAM.

Burnell's Catalogue No. 9764. Page 93. Right column. Substance—Palm leaf. Size—21 × 1¼ inches. Leaves—21. Lines—7 to a Page. Script—Grantha. No. of Granthas—1000. Author—Bhāskaradīkṣita. Complete. Not printed.

Beginning, end and subject—Same as No. 7521.

**Colophon**: Nil.

**Remarks**:—The Ms. is in a decaying condition. Leaves are eaten by rats.

After the colophon is given—

इदं पुस्तकं भूपतिपुरनिवासिना शेषेण लि(खितम्) ।

---

॥ तप्तमुद्राविद्रावणम् ॥

## 7523. TAPTAMUDRĀVIDRĀVAṆAM.

Burnell's Catalogue No. 9765. Page 93. Right column. Substance—Palm leaf. Size—17¾ × 1½ inches. Leaves—37. Lines—7-11 to a Page. Script—Grantha. No. of Granthas—1000. Author—Bhāskaradīkṣita. Complete. Not printed.

**Beginning**:

प्रणम्य पार्वतीनाथं परमानन्दविग्रहम् ।
तप्तचक्राङ्कनस्यात्रावैदिकत्वं विभाव्यते ॥

तत्र केचित् तप्तमुद्राधारणे श्रुतिमपि इत्थं प्रमाण-
यन्ति । तथा हि— पवित्रं ते विततं०

Same as No. 7521.

End, colophon and subject—Same as No. 7521

Remarks:—The Ms. is in a fairly good condition. After the colophon is given—

'ई तप्तमुद्राविद्रावणं वेङ्कटरङ्गय्य ग्रन्थलिपिनि व्राशि-
सम्पूर्णमु शेशिन आकुलु अिण्टाकि पुस्तकं ओकटि सम्पूर्णं ।
राजश्री शाहजिमहाराजुवारु व्राथिञ्चिन पुस्तकमु' ॥

This Ms. was written by Venkatarañgayya a Telugu Brahmin at the bidding of Śāhjī Mahārāj (1648-1710) A. D.

---

॥ तप्तमुद्राविद्रावणम् ॥

## 7524. TAPTAMUDRĀVIDRĀVAṆAM.

Burnell's Catalogue No. 9766 a. Page 93. Right column. Substance—Palm leaf. Size—$19\frac{1}{2} \times 1\frac{1}{4}$ inches Leaves—58 (1-58). Lines—4 to a Page. Script—Grantha. No. of Granthas—1000. Author—Bhāskaradīkṣita. Complete. Not printed.

Beginning, end, colophon and subject—Same as No. 7521.

Remarks:—The Ms. is in a fairly good condition. The other work contained herein is मध्वतिध्वंस.

---

## ॥ आत्मपरीक्षा ॥

## 7525. ĀTMAPARĪKṢĀ.

S. S. Collection No. 102.

**Substance**—Palm leaf. Size—15 × 1⅜ inches. Leaves—72. Lines—7 or 8 to a Page. Script—Grantha. No. of Granthas—2000. Author—Bhāskaradīkṣita. Incomplete. Not Printed

Beginning: (First Prakaraṇa)

......श्रोतव्य इति विधितो वा पुरुषार्थोपयोगि तत्र

........निर्णयरूपफलसामर्थ्याद्वा * *

(Second Prakaraṇa)

कीर्तिमत्यास्तटे रम्ये निवसन्तं महेश्वरम् ।

पश्चिमाभिमुखं सौम्यं वन्दे ताञ्च म(हेश्वरीम्) ॥

स्यादेतत् अत्र...कर्तुरात्मा अन्तःकरणासंवलितः केवल एवात्माऽहमर्थः । तथापि तस्मिन् कर्तृत्वादिधर्मो न वास्तवः । किन्तु भ्रमगृहीत एव ॥

(Third Prakaraṇa)

कावेरीस्नानसंशुद्धान् वेदवेदाङ्गपारगान् ।

द्राविडाननवहं वन्दे शिवभक्तिपरायणान् ॥

(Fourth Prakaraṇa)

उमामहेश्वराचार्यान् चोलदेशेषु विश्रुतान् ।

तातपादानहं नौमि सर्वतन्त्र(विशार)दान् ॥

अस्मत्तातगुरून्वन्दे नृसिंहाश्रमयोगिनः ।
येषान्तत्त्वविवेकाद्याः कृतयः कृतजीविकाः ॥

End:

तथा च दृग्दृश्ययो........(आध्या)सिकसम्बन्धदुर्व्यसनेन । किञ्च सर्वथाऽध्यासिकसम्बन्धव्यतिरेकेण सम्बन्धान्तरापलापे वेदान्तनिष्ठशक्तितात्पर्ययोर्ब्रह्मणा जीवाश्रिताऽज्ञानस्य च ज्ञ.......ण व्यवहारस्य च व्यवहर्तव्येन मिथ्यात्वशरीरान्तर्गताभावस्य प्रतियोगिनःत्वदुक्तदूषणस्य च दूष्येण त्वद्वाक्यस्य चार्थेन श्रवणमननादीनाञ्च श्रोतव्यादिरू * * *
ज्ञानज्ञेययोरध्या... ॥

Colophon:

इति श्रीचोलदेशाभरण कोनेरिराजपुरवास्तव्यहारितान्वयप्रसूतसर्वविद्यासम्प्रदायप्रवर्तकश्रीमदुमामहेश्वराचार्यतनुजभास्करदीक्षितविरचितायां आत्मपरीक्षायां शरीराध्यासपरीक्षाख्यं तृतीयं प्रकरणम् समाप्तम् ॥

Subject: Ātmaparīkṣā 1-4 Prakaraṇas.

1. अहमर्थपरीक्षाप्रकरणम्
2. मनोधर्मपरीक्षा ,,
3. शरीराध्यासपरीक्षा ,,
4. ?

Remarks:—The Ms. is in a very decaying condition.

Bhāskaradīkṣita, the author of this work is identical with the author of the Taptamudrāvidrāvaṇa. From his own verses, we come to know that his father, Umāmaheśvara was very learned and was the disciple of the famous Śrī Nṛsimhāśramin. One Umāmaheśvara is the author of two Vedantic works named Advaitakāmadhenu and Tattvacandrikā. If he as is said here is his father, he was a disciple of Nṛsimhāśramin and a contemporary of Dharmarājādhvarin and should have flourished in 17th century A. D. The author states that he belongs to a village Konerirājapuram and is of Hārītagotra. This author along with another Rāmānandayati is a disciple of Kṛṣṇānandayati to whose work Siddhāntasiddhāñjanam he wrote a commentary called Ratnatūlikā.

---

## ॥ अद्वैतकामधेनुः ॥

## 7526. ADVAITAKĀMADHENUḤ.

Burnell's Catalogue No. 9828 a. Page 94. Right column. Substance—Palm leaf. Size—$16\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—1-112. Lines—3-7 to a Page Script—Telugu. No. of Granthas—2000. Author—Umāmaheśvara. Incomplete. Not Printed.

**Beginning:**

......इति सूत्रास्य सत्यत्वसिद्धिर्वक्तव्या अ......विज्ञानप्रतिज्ञासिध्यर्थं धर्मज्ञानस्य त्रिपदादिका....त्यत्र केचिदूक्तेवति चेन्न(?) ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वं । ज्ञानं चास्य सत्यस्य स्वाधिकरणे स्वेन रूपेणाभिनिष्पद्यत इति

श्रुतौ स्वर....रूपेणाविर्भूत इति पूर्वपक्षं कृत्वा नित्यसि-द्धेन स्वरूपेणेह विभासत इति सिद्धम् ॥

**End:**

तस्य दुरुद्धरत्वे च भोक्तुः शारीरस्य अभोक्तृत्वादे-र्विकामिमां ना(?)शारीरकमीमांसेति समाख्यायाः सिद्ध-त्वात्तद्वशादपि समन्वयसूत्राणां प्रत्यगात्मपरत्वं सि-द्धम् ।

**Colophon:**

सिद्धस्समन्वयोऽध्यायः प्रत्यगात्मैकगोचरः ।
एतेन ब्रह्ममीमांसा समस्तापि विचारिता ॥

अद्वैतकामधन्वाख्या कृतिरेषा मनीषिभिः ।
सेव्यतां सूत्रतात्पर्यसुधारसपिपासुभिः ॥

इति श्रीबल्लालकुलसंभवेन उमामहेश्वरेण विरचितायामद्वैतका-मधेनौ द्वितीयः परिच्छेदः ।

अद्वैतकामधेनुस्समाप्ता ॥

Subject: Advaitakāmadhenu, a Prakaraṇa in 2 Paricchedas.

Remarks:—The Ms. is in a fairly good condition. The other work contained herein is Pūjāvidhāna. The author calls himself as belonging to Ballālakula. He is also the author of another Advaitic work named Tattvacandrikā wherin he says that he was the disciple of one Appayyaśastrin. He appears to be a South Indian who read also under Nṛsimhāśramin the Guru of Dharmarājādhvarin.

## ॥ अद्वैतकामधेनुः ॥

## 7527. ADVAITAKĀMADHENUḤ.

Burnell's Catalogue No. 9824 b. Page 94. Right column. Substance—Palm leaf. Size—$9\frac{1}{2} \times 1\frac{7}{8}$ inches. Leaves—70 (68-137). Lines—10-12 to a Page. Script—Telugu. No. of Granthas—2000. Author—Umāmaheśvara. Incomplete. Wants beginning. Not Printed.

**Beginning:**

....त्वैरभिमतं नित्यत्वं विभुत्वं च न सिध्येत् ।
' अविनाशी वाऽरेऽयमात्मा ' इत्यादिश्रुतेः । ' नात्मा श्रुते-
र्नित्यत्वाच्च ताभ्यः ' इति सूत्राच्च नित्यत्वसिद्धिर्वक्तव्या ।
धर्मज्ञानस्यात्मत्वाभावे श्रुतिसूत्राभ्यां नित्यत्वं कथं सि-
द्ध्यते ।

Same as 7526.

End, colophon and subject—Same as No. 7526.

Remarks:—The Ms. is in good condition. The other work contained herein is Advaitasiddhi. It is given on a slip in Telugu at the beginning that the author of this work is Abhinava-Kālidāsa.

---

## ॥ तत्त्वचन्द्रिका ॥

## 7528. TATTVACANDRIKĀ.

Burnell's Catalogue No. 6281. Page 91. Right column. Substance—Paper. Size—$11\frac{1}{8} \times 6$ inches. Sheets—118.

Lines—11-16 to a Page. Script—Devanāgarī. No. of Granthas—8000. Author—Umāmaheśvara. Complete. Not Printed.

**Beginning:**

श्रीमद्भटाटवीनटाधिराजाय नमः ।

हस्ताभ्यां पुस्तकं शस्तं व्याख्यामुद्रां च बिभ्रतम् ।
जटाधरं तपोनिष्ठं मुञ्चिकेशमुनिं भजे ॥ १ ॥

श्रेयांसि मम भूयांसि दत्तां किमपि दैवतम् ।
अर्धांगमंगना यस्य शेखरः क्षणदाकरः ॥ २ ॥

हरलीलावताराय शंकराय वरौजसे ।
कैवल्यकलनाकल्पतरवे गुरवे नमः ॥ ३ ॥

गुरून्प्रज्ञाजितगुरून् आनम्याप्पयशास्त्रिणः ।
प्रविष्टो निगमान्ताब्धिः यदनुग्रहनौकया ॥

उमामहेश्वरज्ञेन बल्लालकुलजन्मना ।
क्रियते निर्गुणब्रह्ममीमांसातत्त्वचन्द्रिका ॥

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेद इति मन्वादयो जगुः ॥

सर्ववेदान्तवाक्यानां उपबृंहणसंमता ।
भगवत्पूज्यपादीया व्याकृतिः परिदृश्यते ॥

मध्वरामानुजादीनामुपबृंहणवैरिणी ।
श्रुत्यन्तव्याहृतिस्सर्वास्समनीषैकमूलिका ॥

श्रुतिस्मृतिपुराणानि कल्पयित्वा स्वबुद्धितः ।
निर्व्यूढं दर्शनं स्वीयं मध्वेन प्रतिभावता ॥

रामानुजस्तु यतिराट् प्रसिद्धानां जगत्त्रये ।
शैवब्राह्मपुराणानां प्रमाणानामपि स्वतः ॥

वेदार्थप्रथनार्थानामप्रामाण्यं प्रकल्पयन् ।
वैष्णवानि पुराणानि व्याकुर्वंश्च स्वबुद्धितः ॥

तन्त्रं निरवहत्स्वीयं स्वकीयमतिवैभवात् ।
अकल्पयन्प्रसिद्धानि प्रसिद्धान्यविनाशयन् ॥

निमील्य नेत्रे वेदानामुपबृंहणवर्त्मनि ।
स्वोत्कण्ठयैव श्रीकण्ठः श्रुत्यर्थं स त्वकल्पयत् ॥

तस्मादेतन्मतः(?) स्वस्त्यै सांप्रतं प्रयतामहे ।
भाष्यं रामानुजस्यात्र श्रीकण्ठस्यापि दृश्यते ॥

मध्वविध्वंसने मध्वन्यक्कारे च महात्मभिः ।
मध्वदर्शनमामूलमूलं भस्मीकृतं यतः ॥

ततस्तद्दूषणायात्र साक्षान्नैव प्रयत्यते ।
न्यायसाम्यात्तु तस्यापि स्यादेवात्र निराकृतिः ॥

सर्ववेदान्तवाक्यानां अन्तरेणोपबृंहणं ।
स्वबुद्धिमात्रव्याख्यानं यतो मध्वादिभिः कृतम् ॥

ततो मध्वादितन्त्राणि मृषा शाक्यादितन्त्रवत् ।
इति प्रसाध्यते यस्माद्गुरूणां करुणाबलात् ॥

ॐ अथातो ब्रह्मजिज्ञासेत्यारभ्य अनावृत्तिःशब्दादित्येवमन्ते ब्रह्ममीमांसाशास्त्रे संशयः । किमिदं जीवब्रह्मभेदजगन्मिथ्यात्वपरं नेति कुतस्संशयः । तत्तद्विरुद्धार्थानेकसूत्रदर्शनादिति ब्रूमः ॥

End:

सकलवेदोपबृंहणन्यायानुगृहीतस्य भगवत्पादीयविवरणस्यैव अतिरमणीयत्वेन शरणीकरणीयत्वात् ॥ अथातो ब्रह्मजिज्ञासेत्यारभ्य अनावृत्तिःशब्दादित्येवमन्तं कृत्स्नं ब्रह्मणि मीमांसाशास्त्रं जीवब्रह्माभेदजगन्मिथ्यात्वपरमिति सिद्धम् ।

**Colophon:**

इति श्रीबल्लालकुलसंभवेन उमामहेश्वरेण विरचितायां तत्त्वचन्द्रिकायां फलाध्यायविचारो नाम द्वादश उल्लासः ।

Subject: Tattvacandrikā, a polemic in 12 ullāsas against the anti-advaitic interpretations of the Brahmasūtras.

Remarks:—The Ms. is in a fairly good condition. **Alternate** sheets are sulphurated. On the title page of **the Ms. are** given—

'श्रीशरभेन्द्रभूपतिनार्जितं पञ्चनदे ॥'

For details see remarks under No. 7526.

---

## ॥ तत्त्वचन्द्रिका ॥

## 7529. TATTVACANDRIKĀ.

**Burnell's** Catalogue No. 6386. Page 91. Right column. Substance—Paper. Size—15 × 5¾ inches. Sheets—154. Lines—14-16 to a Page. Script—Telugu. No. of Granthas—8000. Author—Umāmaheśvara. Complete. Not printed

**Beginning:**

उमामहेश्वरज्ञेन० Same as No. 7528.

End, colophon and subject—Same as No. 7528.

Remarks:—The Ms. is in a fairly good condition.

---

## ॥ विवेकसिन्धुः—परमार्थबोधः ॥

## 7530. VIVEKASINDHUḤ—PARAMĀRTHABODHAḤ.

**Burnell's** Catalogue No. 6366. Page 93. Left column.

Substance—Paper. Size—9⅜ × 5 inches. Sheets—22. Lines—11 to a Page. Script—Devanāgarī. No. of Granthas—460. Author—Mukundamuni. **Complete.** Pūrvārdha only. Not printed.

Beginning:

श्रीगणेशाय नमः ॥

अगुणाय गुणाढ्याय स्वेच्छायानन्दरूपिणे ।
शुद्धाय स्वप्रकाशाय श्रीराममुनये नमः ॥ १ ॥

अपारसंसारसमुद्रमग्न-
जीवालिसंतारणकारणाय ।
यः प्रादुरासीत्पुरुषोऽविनाशी
तं रामचन्द्रं मुनिमानतोऽस्मि ॥ २ ॥

रामचन्द्रपदांभोजमकरन्दालिवृत्तिना ।
मुकुन्दमुनिनाऽद्वैतज्ञानसर्वस्वमुच्यते ॥ ३ ॥

श्रीमन्मुनीन्द्रेण मुकुन्दनाम्ना
विनिर्मितोऽनन्तमुनेस्सुखाय ।
विवेकसिन्धुर्यमनुप्रविश्य
सद्यः पुमानेति हरिस्वरूपम् ॥ ४ ॥

  

सत्वरजस्तमोगुणरहितस्य सर्वप्रमाणानन्तविद्यारहि-

तस्य केवलब्रह्मणः सृष्टिकर्तृत्वं कथं घटते । एतादृशं ब्रह्म जगतः कारणमिति न वदन्ति सूक्ष्मतत्त्वज्ञाः निरालम्बसिद्धा ब्रह्मवादिनः । तर्हि किं पुनः कारणम् । मायाशबलं ब्रह्म कारणमिति वदन्ति ।

End:

उत्पद्यमानं च ज्ञानं किमज्ञानं निश्शेषं नाशयति ज्ञानं वानिश्शेषं नाशयतीति चर्चायामज्ञानं निश्शेषं नाशयत् स्वयमपि नाशमवाप्नुवत् ज्ञानं मात्रावशेषयति ॥

Colophon:

इति श्रीमद्विवेकसिन्धुग्रन्थः पूर्वार्धः समाप्तः । श्रीरस्तु ॥

(Sheet No. 21)

इति श्रीसकलयोगीश्वराचार्यश्रीहरिनाथचरणारविन्दानवरतशुश्रूषाप्रसादलब्धज्ञानतरणिकिरणश्रेणिनिरस्ताविद्याधिकारश्रीरामनाथमुनीन्द्रचरणारविन्दमकरन्दास्वादनलंपटेन निरस्ताखिलसंसारेण श्रीमुक्तिनाथमुकुन्दमुनिना रचितो निखिलाज्ञानवनविदहनपटुः परमार्थबोधः समाप्तः ॥

Subject: Vivekasindhu; Pūrvārdha alone known as Paramārthabodha; a treatise dealing with Advaitavedānta.

Remarks:— The Ms. is in a fairly good condition.

After the colophon are given some verses introduced with the words:—

अथ शिष्याणां अज्ञातगुरुपङ्क्तिकथनम् ।

The Guruparampara given in this verse is—

विष्णुमुनिः (हरिनाथः)
|
राममुनिः
|
मुकुन्दमुनिः (मुक्तिनाथः)

At the end of these verses is seen this colophon—

इति श्रीमद्विवेकसिन्धुग्रन्थः पूर्वार्धस्समाप्तः ।

Mukundamuni seems to have written this Prakaraṇa for the sake of one Anantamuni. Rāmānanda, the author of the Sūtravṛtti called Brahmāmṛtavarṣiṇī is the pupil of this Mukundānanda. This Mukundamuni is also the author of a bigger work, Mahābhāṣya, a Monistic expression of Upaniṣadic doctrine published in Mahārāṣtra Kavi Series. The author is also known by the name Mukundarāja. This author must be distinguished from another Mukunda the author of a Vedāntic poem named Sujñānaviṁśati.

---

## ॥ विवेकसिन्धुः—परमार्थबोधः ॥

## 7531. VIVEKASINDHUḤ—PARAMĀRTHABODHAḤ.

Burnell's Catalogue No. 6568. Page 94. Left column.

Substance—Paper. Size—8¾ × 4¾ inches. Sheets—5. Lines—14 to a Page. Script—Devanāgarī. No. of Granthas—150. Author—Mukundamuni. Incomplete. Not printed.

Beginning:

अगुणाय गुणाढ्याय स्वेच्छानन्दस्वरूपिणे ।
शुद्धाय स्वप्रकाशाय श्रीराममुनये नमः ॥ १ ॥

निर्गुणस्याप्रमेयस्य शुद्धस्यैकस्य चात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणो ह्युपपद्यते ॥ २ ॥

सत्वरजस्तमोगुणरहितस्य सर्वप्रमाणातीतस्य विद्यावि-
द्यारहितस्य केवलस्य ब्रह्मणः सृष्टिकर्तृत्वं कथं घटते ॥

Same as No. 7580.

End:

निरूपाधिकरूपं विना तद्धर्मेषु सन् तस्यामप्यवस्थायां
स्वहिरण्यगर्भस्ति....धर्मेषु सजन् तस्यामवस्थायां तदेव
व्याकृतं तद्धर्मेषु सजन् तस्यामप्यवस्थायां ब्रह्मादीन् सजन्
तस्यामप्यवस्थायां तावकोऽहमिति प्रश्नो न युज्यते ॥
एतत्··· ।

Subject: Vivekasindhu. Paramārthabodha. The name given by the scribe in the margin is Guruśiṣyasaṃvāda.

Remarks:—The Ms. is in a fairly good condition. For remarks see under No. 7530. Dr. Burnell describes this as a different work.

---

॥ विवेकसिन्धुः—परमार्थबोधः ॥

## 7532. VIVEKASINDHUḤ— PARAMĀRTHABODHAḤ.

**Burnell's Catalogue No. 6367.**

Substance—Paper. Size—9¾ × 5 inches. Sheets—18. Lines—9 to a Page. Script—Devanāgarī. No. of Granthas—416. Author—Mukundamuni. Complete. Not printed.

Beginning:

श्रीगणेशाय नमः ॥

ज्ञानब्रह्माण्डयोरैक्यं लिङ्गसूत्रात्मनोरपि ।
स्वोपाव्याकृतयोरैक्यं क्षेत्रज्ञपरमात्मनोः ॥ इति ।

व्यष्टिसमष्टिसमरूपस्थूलमेकमेव । व्यष्टिसमष्टिरूपमप्येकमेव । व्यष्टिसमष्टिरूपं कारणमप्येकमेव । व्यष्टिसमष्टिरूपं चैतन्यमप्येकमेव । चैतन्यस्य व्यष्टिसमष्टिता कथमिति चेत् । इत्थं । अव्यक्तव्यक्तभावानां ज्ञानोपाधि चैतन्यं ।

End:

प्रबुद्धाखिलमोहोऽपि लोककार्यं तथाऽत्मवत् ।

इत्येतत् ।

वेदान्तसारसर्वस्वं पाषण्डा नैव मन्यते ।

किञ्जानीयुरिमे पापाः हताः स्वीयाऽसदुक्तिभिः ॥

पाषण्डानामयुक्तानां नृणामुत्पथगामिनाम् ।

एतद्विज्ञानसर्वस्वं मतिमान्न प्रकाशयेत् ॥

शुद्धानां गुरुभक्तानां श्रद्धालूनां सुशीलिनाम् ।

दयावतां सुशिष्याणां ज्ञानमेतत्प्रकाशयेत् ॥ २ ॥

आत्मज्ञानैकमूले भवसलिलनिधौ क्लिश्यमानान् मनुष्यान्

दृष्ट्वा ज्ञानोपदेशात् करुणहृद... याक्रान्ततत्तारणेच्छुः ।

विष्णुर्भूमौ युगेऽस्मिन् हरिरिति गदितः प्राप्तमाध्यन्दिनीयः

स्वाध्यायप्रोक्तसर्वं स्ववितरणे(?) जनितख्यातिरग्रेऽवतीर्णः ॥

ज्ञानानेन सताप्यनेन तपसा स्वाराधितो धूर्जटिः

पूर्णाहुत्यवसान...समये प्रादुर्बभूव क्षणात् ।

अग्नेराग्निरिवापरः प्रकटितज्ञानैकमूर्तिस्तदा

मत्तः किं त्वमितीप्स्यसीत्यभिदधे तस्याग्रतस्तास्थिवान् ॥ ५ ॥

तत्तस्योपदिदेश सांगमखिलं यत्नेन जिज्ञासितं

मोदं मेदुरयन्नुवास चतुरः स्वान्ते च तस्य क्षणम् ।

पार्वत्या सहितः शिवः शिववपुः तस्मिन्पुरस्तात्स्थिते

पश्यन्त्येव सविस्मये सकुतुके विप्रे कुलान्तर्दधे ॥ ६ ॥

वेदान्तप्रतिपाद्यतत्त्वरहस्यं ज्ञात्वादिनाथाद्धरिः
सच्छिष्यानधिकारिणो बहुतरान् सम्बोध्य तत्त्वं परं ।
तन्मध्ये गुणवत्तरमधिमसं(?) श्रीरामनाथं मुनिं
साम्राज्येऽभिषिषेच योगघनिष्ठं पट्टान्वितं योगिनाम् ॥ ७ ॥

ज्ञाने कस्याधिकारो भवति बहुतरेष्वेषु शिष्येषु मध्ये
ध्यात्वैवं स्वेन चित्ते सकलगुणनिधिः श्रीमुकुन्दं मुनीशः
निश्चित्याथान्वगृह्णादखिलमपि तदा ज्ञानसर्वस्वमस्मै
सच्छिष्यायोग(प)दिष्टं प्रसरति बहुशः किं च सश्रीयते च ॥

सच्छिष्यत्वमवाप्य सम्यगखिलाम्नायोक्ततत्त्वार्थवित्
भूत्वेमं कृतवानमन्दमतिमान् रामान् मुकुन्दो मुनिः ।
मन्दामन्दविबोधनाय सदयो ब्रह्मात्मबोधाभिध-
ग्रन्थं धीरमनोहरं परिमितैः वार्चा विलासैः परैः ॥ ९ ॥

शिष्येष्वन्येषु सत्स्वप्यहमाधिककृपापात्रमस्यास्मि जातो
ग्रन्थं मद्बोधसिन्धौ कुरु शिशुसुगमं ज्ञानसर्वस्वसारम् ।
एवं विज्ञापितः सन्नवमतशिरसाज्ञानवेदेन धीमान्
सद्यः कृत्वादिनास्मै सकलकरुणहृदयः श्रीमुनीन्द्रो मुकुन्दः ॥

**Colophon:**

इति श्रीमन्मुकुन्दविरचिते परमार्थबोधे सच्चिदानन्दविवे-
को नाम तृतीयं प्रकरणं समाप्तम् ॥

Subject: Vivekasindhu: Paramārthabodha.

Remarks :—The Ms. is in a fairly good condition. This Ms. also contains the Muniparamparā given at the end of 7530. Dr. Burnell mistakes this to be a different work from No. 7530. For remarks see under No. 7530.

---

## ॥ अद्वैतभूषणम् ॥

## 7533. ADVAITABHŪṢAṆAM.

Burnell's Catalogue No. 9886. Page 95. Right column. Substance—Palm leaf. Size—15 × 1½ inches. Leaves —31. Lines—6 to a page. Script—Grantha. No. of Granthas—500. Author—Bodhendrayati. Incomplete. Not printed.

**Beginning** :

यस्मिन्नध्यस्तमेतद्वियदानिलमुखं विश्वमाभात्यबोधात्
वातः पूरे पयस्तिन्विव मरुधरणिसंश्रितेऽम्बुजन्म्बोः ।
तं मे वेदान्तविद्या हृदि सततलसन्नित्यनिर्द्वन्द्वरत्नं
विवेकप्राप्यमाशु स्फुरति हृदि सुखज्ञानसत्यात्मरूपम् ॥

अखण्डसच्चिदानन्दमात्मानं भुवनेश्वरम् ।
उमासहायं श्रीकण्ठं दक्षिणामूर्तिमाश्रये ॥

विघ्नान्धकारसन्दोहनिवर्तनविवस्वते ।
गणेशाय नमस्तुभ्यं वाक्यार्थज्ञानहेतवे ॥

विश्वरूपं च विश्वेशं विश्वसत्ताप्रदं शिवम् ।
वेदयोनिमहं वन्दे व्यासं वेदार्थसिद्धिदम् ॥

यमाश्रिता सती देवी नन्दयत्यात्मनं श्रिताम् ।
तमाश्रये श्रिया जुष्टं शंकरं करुणानिधिम् ॥

व्याख्यावाचोतिदिव्यत्सुरवरतटिनीभङ्गभङ्गप्रवीणा
ज्ञात्वा त्यक्त्वाभिमर्शा झटिति भयहरभ्रान्तनेत्राय यस्य ।
यावन्तो द्वैतिषण्डा श्रुतिशिखरवचोभावबोधैकदक्षं
गीर्वाणेन्द्रं प्रपद्ये गुरुवरमनिशं तद्यथार्थाभिधानम् ॥

गीर्वाणेन्द्रयतीन्द्राणां चरणांबुरुहद्वयम् ।
स्वर्गापवर्गदं पुंसां नौमि विघ्नोपशान्तये ॥

टीकातन्मूलभाष्यादीन् सम्यक्बोधेन्द्रसंयमी ।
आलोच्य तत्वं ....करोत्यद्वैतभूषणम् ॥

धर्मजिज्ञासासूत्रे ह्येतदवस्थितं । स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेः अदृष्टार्थत्वमुत दृष्टार्थत्वमिति विषये विविदिषाद्दृष्टार्थत्वं । न च फलाभावः । विश्वजिन्न्यायेन स्वर्गस्य रात्रिसत्रन्यायेनार्थवादिकघृतकुल्यादेर्वा फलत्वोपपत्तेः ।

End:

'यदाभवेस्य दुःखाभावविषयत्वात् दुःखाभावोऽपि प्र-

तियोगिज्ञानाभावान्नानुभवितुं शक्यते ' इति न तस्या-
प्यनुसंधानमिति चेत् तर्हि उत्थितस्य सुषुप्तौ दुःखकारणा-
भावप्रतिसन्धानादर्थापत्त्या तत्कल्पनमस्तु । अस्मन्मते
तु......... ॥

Subject: Advaitabhūṣaṇa.

Remarks:—The Ms. is in a fairly good condition. For details see remarks under No. 7174 (Vol. XII).

---

॥ अद्वैततत्त्वदीपः ॥

## 7534. ADVAITATATTVADĪPAḤ.

Burnell's Catalogue No. 9649. Page 93. Left column. Substance—Palm leaf. Size—$18\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—144. Lines—11 to a Page Script—Grantha. No. of Granthas—2800. Author—Nityānanda. Incomplete. Not Printed.

Beginning:

नमस्कृत्वाथ रामाय गुरवे शङ्कराय च ।
अद्वैततत्त्वदीपोऽयं नित्यानन्देन वर्ण्यते ॥

ओं ॥ तत्त्वमसि अहं ब्रह्मास्मीत्यादि विधिवाक्यैर्जीवप-
रयोरैक्यं प्रतीयते । इयं च प्रतीतिर्मोक्षसाधनं । तथा हि ।

तत्त्वमसीत्यनेन जीवपरयोरैक्यं प्रतिपाद्य पुरुषं सोम्यात-
हस्तमानयन्त्यपहार्षीस्तेयमकार्षीत् परशुमस्मै तपत इति
स यदि तस्य कर्ता भवतीत्यादिना त्वनृताभिसंधस्य
बन्धं सत्याभिसन्धस्य मोक्षं चाभिधाय तस्य तावदेव चिरं
यावन्न विमोक्ष्येऽथ संपत्स्य इति वाक्येन प्रारब्धकर्म-
क्षयोत्तरकालं ब्रह्मप्राप्तिरूपाया मुक्तेः प्रतिपादनादैक्य-
ज्ञानं मोक्षसाधनम् ॥

End:

बृहदारण्यकेऽविद्वांसोऽबुधो जना इति—

'आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसञ्चरेत् ॥'

इति हरिः ओं ॥

Colophon: Nil.

Subject: Advaitatattvadīpa.

Remarks:—The Ms. is in a fairly good condition. At the end of this work is given the following:—

"शैवे लेखनीयं ॥" व्यासस्मृतौ—

'अथोऽमशिवायेति मन्त्रेणानेन चार्चयेत् ।
नमस्कुर्यान्महादेवं अमृतं सत्यमीश्वरम् ॥'

शिवस्यान्तर्यामित्वं ईश्वरगीतायां—

"त्वामेकमीशं पुरुषं पुराणं
प्राणेश्वरं रुद्रमनन्तरूपम् ।
नमामि सर्वेन्द्रियसन्निविष्टं
प्रचेतसं ब्रह्ममयं पवित्रम् ॥"

शिवस्य जगत्कारणत्वमानुशा...

"अन्तश्च बहि... राकृतो विशेषनुत् ।
हिरण्यगर्भहेतुश्च बहिर्भूतप्रयोजकः ॥
ब्रह्मा विष्णुः प्रपञ्चश्च यदीयांश........."

---

॥ अद्वैतसिद्धिः ॥

## 7535. ADVAITASIDDHIḤ

Burnell's Catalogue No. 9651. Page 93. Left column.

Substance—Palm leaf. Size—$18\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—56. Lines—8 to a Page. Script—Telugu. No. of Granthas—1900. Author—Madhusūdanasarasvati. Incomplete. Printed.

Beginning:

मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रय-
स्सत्यज्ञानसुखात्मकश्श्रुतिशिखोत्थाखण्डधीगोचरः ।
मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं
मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः ॥

End:

ज्ञानस्य ज्ञानसंयोगसमवाययोरभावात् अन्य...था

चानाध्यासिकत्वस्य संबन्धस्याभावत् । न च विषयविभावः

सः तस्य विषयत्वविषयित्वरूपस्य एकैकमात्रानिष्ठत्वेन

द्विनिष्ठसंबन्धात्मकत्वासम्भवात् दुर्निरूपत्वाच्च । तथा हि

विषयित्वं किं ज्ञानजन्यफलधारत्वं, किं वा ज्ञानजन्य... ।

Colophon: (Leaf No. 51)

इत्यद्वैतसिद्धावसतःसाधकत्वोपपत्तिः ।

Subject: Advaitasiddhi; up to the middle of the first Paricceheda.

Remarks:— The Ms. is in a fairly good condition.

This is a polemical work which establishes the supremacy of the Advaita after successfully refuting the several objections raised by the Dvaitins.

The Advaitasiddhi is the magnum opus of Madhūsūdanasarasvati and is considered as the crushing reply to Vyāsarājasvāmin's Nyāyāmṛta. This latter author lived between 1446 & 1539 A. D. Madhusūdana wrote his Advaitaratnarakṣaṇa as a criticism of Śaṅkaramiśra's Bhedaratna, which in turn is a Naiyāyika's criticism of the Khaṇḍanakhaṇḍakhādya. Śaṅkaramiśra lived after 1529 A. D. Madhusūdana Sarasvatī has written a commentary on Bopadeva's Harilīlāviveka and Appayyadīkṣita's Siddhāntaleśasaṅgraha. Thus he may be placed in the latter half of the 17th century A. D.

Vide-pp. 97-104, Vol. III. J. O. R., Madras.—The Age of Madhusūdanasarasvati by Mr. R. Kṛṣṇaswami Śāstri.

The work has been printed by the Nirṇayasāgar Press and edited by Pandit N. S. Anantakṛṣṇaśāstri.

---

## ADVAITASIDDHI.

| Descriptive No. | Collection No. | Substance. | Size inches. | No. of Sheets or leaves. | No. of Lines per Page or sheet. | Script | Complete or otherwise. |
|---|---|---|---|---|---|---|---|
| 7536 | B. L. 9824 a | Śrītāla. | $9\frac{1}{2} \times 1\frac{7}{8}$ | 67 | 10 | Telugu. | Incomplete; |
| 7537 | N. S. 81 | Palm leaf. | $5\frac{1}{2} \times 1\frac{1}{4}$ | 186 | 12 | Grantha | ,, |
| 7538 | S. S. 99 | ,, | $17 \times 1$ | 85 | 9 | ,, | ,, |
| 7539 | ,, 104 | Śrītāla. | $14 \times 1\frac{1}{2}$ | 131 | 10 | ,, | ,, |

DETAILED REMARKS
on the
ADVAITASIDDHI MSS.
IN THE ABOVE TABLE.

7536 The other work contained herein is Advaitakāmadhenu.

---

॥ अद्वैतसिद्धिव्याख्या—लघुचन्द्रिका ॥

## 7540. ADVAITASIDDHIVYĀKHYĀ—LAGHUCANDRIKĀ.

N. S Collection No. 82.

Substance—Palm leaf. Size—$15\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—122 (28+57+37). Lines—6 to a Page. Script—Grantha. No. of Granthas—1800. Author—Brahmānanda. Incomplete. Printed.

Beginning:

नमो नवघनश्यामकामकामितदेहिने ।
कमलाकामसौदामकणकामुकगेहिने ॥

End:

आपातादिति ॥ तथा च शुद्धस्यावृतत्वे विशिष्टस्यापि तद्यावश्यकं । अत एव विशिष्टरूपेणापि गुरुत्वादिकमावृतमिति भावः ॥ सदात्मनेति ॥ सज्ञानानां....... ।

Subject: Advaitasiddhivyākhyā, Brahmānandīya otherwise known as Laghucandrikā up to

दृश्यत्वहेतूपपत्तिः ।

Remarks:—The Ms. is in a decaying condition.

This author is also called Gaudabrahmānanda. He is said to have commented on all the works of Madhusūdanasarasvatī. He was the disciple of another commentator of Madhusūdanasarasvatī, Nārāyaṇatīrtha by name, who flourished about 1790 A. D. Hence Brahmānanda should have flourished in the beginning of the 19th century.

This commentary of his on the Advaitasiddhi is called Laghucandrikā. It has been criticised in the Mādhva work Nyāyabhāskara and defended in the Vedānta work, Nyāyenduśekhara by Tyāgarājamakhin.

This work has been printed in the Nirṇayasāgar edition of the Advaitasiddhi. He is also the author of a running commentary on the Brahmasūtras called Brahmasūtramuktāvalī. Vide No. 7106, Vol. XII.

---

## ॥ अद्वैतसिद्धिव्याख्या—लघुचन्द्रिका ॥

## 7541. ADVAITASIDDHIVYĀKHYĀ—LAGHUCANDRIKĀ.

S. S. Collection No. 92.

Substance—Śrī tāla. Size—13 × 1⅝ inches. Leaves—61 (46 + 15). Lines—10 to 12 to a Page. Script—Grantha. No. of Granthas—2250. Author—Brahmānandā. Incomplete. Printed.

**Beginning:**

हरिः ओं

योग्यतायाः इति ॥ बाधाभावरूपयोग्यतायास्तत्व-

विशिष्टरूपेण मिथ्यात्वबोधकशक्तिरूपा सन्दनिष्ठा वा सेति

भावः। आदिनाकाङ्क्षादेर्ग्रहणम् ॥ आप्तेति ॥ वाक्यार्थ-
प्रमावदुक्तेत्यर्थकं प्रामाण्यायोगादिति। तथा च प्रमाण-
शब्दबोध्यत्वेन स्वबोधकशब्दादिसमसत्ताकत्वं साध्यमि-
ति भावः।

End:

न चैवमपि अज्ञानविषयस्य ज्ञानाज्ञानाभ्यां व्याघात
इति वाच्यम्। ज्ञानादिष्विवाज्ञानेपि विशेषणतया विष-
यस्य साक्षिभास्यत्वसम्भवात् विषयकत्वविशिष्टैर्विद्यमाने-
नाव्रतसाक्षिसम्बन्धरूपस्य साक्षिभास्यत्वस्य भाष्येरपि
स्वीकारेण तत्र संशयाद्ययोग्यत्वस्य सर्ववादिसम्मतत्वात्।
तथापि न जानामीति प्रत्यक्षे प्रमा विरोधित्वेन.... ।

Colophon: (Leaf No. 10)

तर्कैस्सारस्वतै रत्नैः चन्द्रिका चन्द्रभूषणैः।
दुरन्तध्वान्तभङ्गाय प्रोक्ता मिथ्यात्वसङ्गतिः ॥

Subject: Advaitasiddhivyākhyā known as Brahmānandīya
or Laghucandrikā; A fragment.

Remarks:—The Ms. is in good condition.

---

॥ अद्वैतसिद्धिव्याख्या—लघुचन्द्रिका ॥

## 7542. ADVAITASIDDHIVYĀKHYĀ—LAGHUCANDRIKĀ.

N. S. Collection No. 1.

Substance—Paper. Size—9½ × 4¾ inches. Sheets—108. (70-122). Lines—12 to a Page. Script—Grantha. No. of Granthas—700. Author—Brahmānanda. Incomplete. Printed.

Beginning

...त्वं साध्यं व्याप्नोति न तु साधनमिति भावः। परे ....वानां शुक्तिरौप्यादीनामत्यन्तासत्त्वेन तेषु तदसिद्धेः। अपरोक्षतया भासमान एव हि अज्ञानविषयतानवच्छेदकत्वं। नित्यापरोक्षे त्वलीके तत्र भातीति प्रत्ययादज्ञानविषयतावच्छेदकत्वमेव।

End:

तादृशोपस्थिते युगसहस्रेणापि असम्भवात्। किं तु देशकालस्वव्यापकत्वेनात्यन्ताभावो निवेश्यः। तथा च तादृशव्यापकत्वस्य सर्वदेशकालवाक्यघटितत्वेन स्वदे...।

Subject: Advaitasiddhivyākhyā, Laghucandrika or Brahmānandīya.

Remarks:—The Ms. is in good condition.

---

## ॥ अद्वैतामृतम् ॥

## 7543. ADVAITĀMṚTAM.

Burnell's Catalogue No. 6480. Page 92. Left column.

Substance—Paper. Size—6¼ × 4½ inches. Sheets—50. Lines—10 to a Page. Script—Devanāgarī. No. of Granthas

—600. Author—Jagannāthasarasvati. Complete. Not printed.

Beginning:

हरिहरसरस्वती यद्गुरुरीड्यः परमहंसानाम् ।
स जगन्नाथपदोत्तरसरस्वतीशब्दसंबोधः ॥ १ ॥

कर्मेदिकण्ठालंकार ... वेदान्तवारिधेः ।
रचयत्यमलं ग्रन्थमद्वैतामृतनामकम् ॥ २ ॥

आसीद्यतिवरः कश्चित् विवेकाश्रमसंज्ञकः ।
यत्प्रसादेन बहवो मुक्तिमार्गमुपाश्रिताः ॥ ३ ॥

नवाक्यंकांवनंदुस्त्रिगजसंख्या विलोकिताः(?) ।
मठास्तेन जगत्यस्मिन् तेषु लेभे स्थितिं न सः ॥ ४ ॥

स स्वोचितं मठं लोके क्वचनापि विचारयन् ।
न चापत्तं मनो यत्र यतेस्तस्य प्रसीदति ॥ ५ ॥

एवं गिरिवरारण्यसरित्सागरवापिकाः ।
पश्यता किल तेनैक्षि पाञ्चजन्याभिधो नदः ॥ ६ ॥

द्विस्थू(?) कामगो रम्यो नवद्वारविभूषितः ।
स्वोचिताचारनिर्वृत्तियोग्यस्तीर्थपदाश्रमः ॥ ७ ॥

End:

जीवितं मरणं तन्वि परोपकृतिवर्जितं ।
मरणं जीवितं मन्ये यत्परोपकृतिक्षमम् ॥ ६५ ॥

इति प्रबोधिता चित्तवृत्तिस्तेनात्र योगिना ।
(विर)ता विषयेभ्यः सा ब्रह्मात्मैक्यमुपाददे ॥ ६६ ॥

प्राप्तस्यै ...दवार्धैरवाप्तिः-
त्यक्तस्यैव क्लेशवार्धेस्तदाभूत् ।
त्यागो यस्मिन् तत्वमस्यादिवाक्यैः
जाता काले तादृशी चित्तवृत्तिः ॥ ६७ ॥

सद्गुरिहरसरस्वतीयतीन्द्र-
द्युमणिकराभिहताज्ञतान्धकारः ।
जयति परमहंसयोगिवर्यो
नरहरिसंज्ञचि(दात्म)सक्तचित्तः ॥ ६८ ॥

जिताहारो जितक्रोधो जगन्नाथसरस्वती ।
तेनायं रचितो ग्रन्थो ह्यद्वैतामृतसंज्ञकः ॥ ६९ ॥

एतस्य कवलान् पञ्चास्वाद्य सादरतां गताः ।
अमृतत्वं प्रयान्त्याशु विबुधा यतिसत्तमाः ॥ ७० ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरसरस्वतीप्रियशिष्यपर-
महंसपरिव्राजकाचार्यजगन्नाथसरस्वतीविरचिते अद्वैतामृते
पञ्चमः कवलः ।

**Subject:** Advaitāmṛtam a Vedāntic Prakaraṇa 1-5 Kabalas.

**Remarks:**—The Ms. is in a fairly good condition.

The author of this work is Jagannāthasarasvatī, pupil of Hari Hara Sarasvatī.

## ॥ इष्टसिद्धिः ॥

## 7544. IṢṬASIDDHIḤ.

**Burnell's Catalogue No.** 9851. Page 95. Left column. Substance—Palm leaf. Size—$16\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—274. Lines—5-8 to a Page. Script—Grantha. No. of Granthas—4500. Author—Vimuktācārya. Incomplete. (Wants beginning). Printed.

**Beginning:**

............यानुभूतिरजागमे ॥

यानन्दात्मानन्दवि........ ।

...भेदादिजगन्मायाचित्रभित्तिर्नात्मात्मताम् ॥

इष्टानिष्टाप्तिहान्योरिच्छोः सत्सिद्धि[र्य]स्सदृशा श्रुतेः ।

तस्मात्तत्वेष्टसिध्यर्थं विवृणोम्यात्मस........ ॥

....दृशेः येन स्वतस्सिद्धतां द्योतयति । अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गान्न च स्वतःसिद्धं ल?प्रागभावादेः स्वतोऽन्यतो वा सिध्यन्ति । ततो जागतोऽस्थानान्येऽपि भावविकाराः जन्माभिख्या तेषां चेत्यानां च न विद्व्यर्थत्वं रूपादिवदतोऽमेयानास्यामेयोऽयमाप्यस्मीत्यर्थः(?) ।

End:

आत्मैको निष्क्रियोऽनन्तोऽद्वयोऽनुभवविग्रहः ।
अतमस्तं(स्को) जन्मा(ना)त्मस्थो ज्योतिषां ज्योतिरात्मभाः ॥

सर्वज्ञः परमानन्दो वेदान्तात्मप्रमाणगः ।
इत्येषोऽर्थो विशेषेण मयेष्टो वेदविन्मतः ॥

अर्थश्चायमनिर्वाच्यः यदविद्या प्रसिष्यति ।
व्यचीचरमविद्यां तां अत इष्टार्थसिद्धये ॥

**Colophon**:

इति श्रीमत्परमहंसपरिव्राजकाचार्यात्म(बोध)पूज्यपादशिष्य
विमुक्ताचार्यस्य कृतौ इष्टसिद्धावष्टमोऽध्यायः ।

येनैव निर्जिताः सर्वे वादिनो न्यायमुद्रिताः ।
वादिमुद्र(रिणं) वन्दे विमुक्तात्माभिधं यतिम् ॥

Subject: Iṣṭasiddhi, in eight adhyāyas.

Remarks:—The Ms. is in good condition, and is full of scriptorial blunders.

This work is being edited by Prof. Hiriyanna for the Gaikwad Oriental Series.

---

॥ खण्डनखण्डखाद्यव्याख्या ॥

## 7545. KHAṆḌANAKHAṆḌAKHĀDYA-VYĀKHYĀ.

Burnell's Catalogue No. 6371. Page 93. Left column.

Substance—Paper. Size—$11\frac{1}{2} \times 8\frac{3}{4}$ inches. Leaves—

155. Lines—8 to a Page. Script—Devanāgarī. No. of Granthas—1800. Author—Śaṅkaramiśra. Complete. Not printed.

Beginning:

हरिशंकरयोरसितासितं
भुजगारातिभुजंगलाञ्छनम् ।
वपुरस्तु मुदे विरुद्धयोः
अपि संसर्गि न भिन्नतां मतम् ॥

विरुद्धधर्मद्वयसन्निपाते-
ऽप्यभेद एवेति विभावयन्तः ।
पुनातु भेदप्रतिभासशून्यं
स्त्रीपुंसरूपं शिवयोश्शरीरम् ॥

भवनाथसूक्तिगुम्फन-
मिह खण्डनखाद्यटीकायाम् ।
श्रीशंकरेण विदुषा
विदुषामानन्दवर्धनं क्रियते ॥ २ ॥

प्रारिप्सितप्रतिबन्धकदुरितनिवारणकारणेष्टदेवतानमस्काररूपमङ्गलं कुर्वन्नेव प्रेक्षावत्प्रवृत्त्यङ्गप्रयोजनाभिधेयसंबन्धं प्रति.. परः परमतनिराचिकीर्षया स्वमते ब्रह्माद्वैतस्थापनां वैतण्डिकोऽपि स्वप्रौढिप्रकाशनाय सूचयन्नाह । अविकटेति । .

End:

कोऽसौ विशेष इति वादिप्रश्नेन निर्वचनमावश्यकम-

न्यथा सर्वत्र सामान्येनैवोत्तरं स्यादिति परिहरति ।

तस्येति ।

व्याख्यानमिदमस्माकं यथा पितृवचस्तथा ।
व्याख्यानगुणदोषाभ्यां संबन्धो मत्पितुर्न मे ॥

**Colophon:**

इति श्रीमहामहोपाध्यायमिश्रश्रीशंकरकृतं प्रथमखण्डनखाद्या-
नन्दवर्धनपुस्तकं समाप्तम् ।

संवत् १६५९ समे आश्विनवदि अष्टमीसमये...वरशुक्रवासरे ।

Subject: Khaṇḍanakhaṇḍakhādyavyākhyā; First khaṇḍana only.

Remarks:—The Ms. is in a fairly good condition. On the title page is given—

वरखेडशिषग्रन्थः

Extracts from this work are published in the Chowkhamba edition of Khaṇḍanakhaṇḍakhādya. The author of this work is the son of Bhavanāthamaithila and is the author of other works chief of them being a commentary named Upaskāra on Vaiśeṣikasūtras a commentary on Udayanācārya's Ātmatattvaviveka, Rasārṇava, and Vādavinoda. From the last śloka above the colophon we see that his father was a great scholar and Vedāntin to whom he ascribes the credit of the work. The Ms. is dated A. D. 1602.

---

॥ तत्त्वप्रक्रिया ॥

## 7546. TATTVAPRAKRIYĀ.

Burnell's Catalogue No. 9811 b. Page 94, Right column.

Substance—Palm leaf. Size—18¾ × 1½ inches. Leaves—5 (2-6). Lines—15 to a Page. Script—Telugu. No. of Granthas—800. Author—Anantadeva ? Incomplete. Not printed.

Beginning:

ओम् ।

सर्ववेदान्तसिद्धान्तसंप्रदायानुसारतः ।
नमस्कृत्य गुरून् वक्ष्ये प्रक्रियां तत्त्वसंश्रयाम् ॥

यच्छ्रीमद्रामतीर्थेभ्यः संप्रदायसमागतं ।
श्रुतं सत्तर्कसचिवं विविच्य तदिहोच्यते ॥

अखण्डमद्वितीयं आनन्दैकरसं स्वप्रकाशं चैतन्यमेव जगतः तत्त्वम् । अनिर्वचनीयस्येव सर्पस्य रज्जुः कथं तर्हि जीवेश्वरविभागप्रतिपत्तिरिति चेत् अज्ञानरूपादुपाधेरिति ।

End:

" आतुराणां तु सन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य सन्यासं तत्र पूरयेत् ॥ "

इति स्मृतेश्च न सर्वानुष्ठानं । 'सन्यासाद्ब्रह्मणस्स्थानं' इति स्मृतेश्च कर्मणा पितृलोकं आनुषङ्गिकफलसमर्पकत्वात् । तस्मात् सन्यासो ज्ञानाङ्गमेव न श्रवणाङ्गमिति.... ।

Subject: Tattvaprakriyā, a short Prakaraṇa.

Remarks:—The Ms. is in a fairly good condition. The other work contained herein is Advaitamakarandavyākhyā. The author

of this work calls himself the pupil of Rāmatīrtha who is also the Guru of Anantadeva the author of Siddhāntatattva. Besides Anantadeva wrote a commentary on this work wherin he calls himself as the pupil of the same Rāmatīrtha. So both the author of this work and its commentary are desciples of Rāmatirtha and are contemporaries and should have lived in the 16th century A. D. Anantadeva may be the author of both this work as also its commentary.

---

## ॥ तत्त्वप्रक्रियाव्याख्या—सम्प्रदायनिरूपणम् ॥

## 7547. TATTVAPRAKRIYĀVYĀKHYĀ—SAMPRADĀYANIRŪPAṆAM.

**Burnell's** Catalogue No. 9812. Page 94. Right column. **Substance**— Palm leaf. Size—$18\frac{3}{4} \times 1\frac{3}{4}$ **inches.** Leaves—15. Lines—16-17 to a Page. Script—Telugu. No. of Granthas—2000. Author—Anantadeva ?. Incomplete. Not printed.

**Beginning**:

वेदान्तनयसिद्धान्तपरीक्षणविचक्षणान् ।
नमामि तातचरणान् श्रीमद्गोविन्दविग्रहान् ॥

श्रीरामतीर्थचरणस्मरणस्य प्रसादतः ।
प्रस्थानत्रयसिद्धान्तसंप्रदायः प्रदर्श्यते ॥

सिद्धान्ततत्त्वव्याख्यानव्याजेन विशदीकृतम् ।

वेदान्तसम्प्रदायार्थं गृह्णन्तु ज्ञानकामिभिः ॥

सम्यङ्निरूपितमिदं यदि नाद्रियन्ते-
दुष्टा निकृष्टमतयो हृदि मत्सरेण ।
किं तावता....वता मम चेन्न जातु
दुग्धस्य शुद्धमधुरस्य विमोक्षणं स्यात् ॥

चिकीर्षितं प्रतिजानीते ॥ सर्ववेदान्तेति ॥ सर्वश्चासौ वेदान्तसिद्धान्तश्चेति । विवरणाचार्यवार्तिककारादिकृत-निरूपणाभेदेनानेकविधत्वमापन्नस्य क्वापि वेदान्तसिद्धा-न्तो निरूप्यत इति भावः ।

End:

न च प्रस्थानत्रये दृष्टिसृष्टिवादे ईश्वरो नास्तीति क्व-चिद्ग्रन्थोक्त(?) परमार्थतो नास्तीति तु व्यवहारवादेऽपि तुल्यं । उपसंहरति ॥ तस्मादिति ॥

धर्मावधीनां करुणावधीनां
श्रीमद्गुरूणां चरणावलम्बात् ।
यत्सम्प्रदायं श्रुतिसंप्रभाय(दायं)
निरूपितं तुष्यतु तेन विष्णुः ॥

इत्येषा वाङ्मया पूजा तुरगास्यस्य पादयोः ।
अर्पिता तेन मे देवः प्रीयतां परमेश्वरः ॥

Colophon:

इति श्रीमदापदेवसूनुना अनन्तदेवेन कृतं सम्प्रदायनिरूपणं समाप्तम् ॥

Subject: Tattvaprakriyāvyākhyā otherwise known as Sampradāyanirūpaṇa.

Remarks:—The Ms. is in good condition. There are lacunae in the Ms. For details about the author see notes under No. 7547.

---

## ॥ तत्त्वानुसन्धानम् ॥

## 7548. TATTVĀNUSANDHĀNAM.

Burnell's Catalogue No. 6352. Page 92. Left column. Substance—Paper. Size—$10\frac{1}{2} \times 4\frac{1}{2}$ inches. Sheets—2-27. Lines—11-13 to a Page. Script—Devanāgarī. No. of Granthas—850. Author—Mahādevasarasvati. Incomplete. Printed.

**Beginning:**

........" अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।"
" ज्ञानेन तु तदज्ञानमेषां नास्ति........ ॥" इति स्मृतेश्च । तच्च ज्ञानं द्विविधं । मायाविद्याभेदात् । शुद्धसत्त्वप्रधानं स तु मायेत्युच्यते ।

**End:**

' यदुकुलवररत्नं कृष्णमन्यांश्च देवान्
मनुजपशुमृगादीन् ब्राह्मणादीन् न जाने ।
परमसुखसमुद्रे मज्जनात्तन्मयोऽहं
गलितनिखिलभेदः सत्यबोधैकरूपः ॥ ७ ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशसरस्वती-

पूज्यपादशिष्यभगवन्महादेवसरस्वतीमुनिविरचितं तत्त्वानुसन्धानं समाप्तम् ॥

Subject: Tattvānusandhāna in four chapters i. e.

1 मायापञ्चीकरणादिनिरूपणम् ! 2 वृत्यादिनिरूपणम् ।

3 स्मृतिप्रामाण्यादिनिरूपणम् । 4 मुक्तिस्वरूपनिरूपणम् ।

Remarks:—The Ms. is in a fairly good condition.

This work is published along with Brahmasūtradīpikā in the Benares Sanskṛt series. This author is also the author of a commentary on Kapila's Sāṅkhyasūtras which is called Sāṅkhyavṛttisāra. He is a desciple of Swayamprakāśayati an author of many Vedāntic works.

---

॥ नैष्कर्म्यसिद्धिः (सव्याख्या) ॥

## 7549. NAIṢKARMYASIDDIḤ (SAVYĀKHYĀ).

S. S. Collection No. 34.

Substance—Paper. Size—$12 \times 5\frac{3}{4}$ inches. Sheets—119. Lines—14 to 16 to a Page. Script—Devanāgarī. No. of Granthas—3500. Author—Sureśvara. Complete. Printed.

Beginning:

मूलं ॥ आब्रह्मस्तम्बपर्यन्तैः सर्वप्राणिभिः सर्वप्रकारस्यापि दुःखस्य स्वरसत एव जिहासितत्वात् तन्निवृत्त्यर्था प्रवृत्तिरस्ति स्वरसत एव ।

व्याख्या ॥

श्रीगणेशाय नमः । श्रीरामचन्द्राय नमः ।

विष्णोस्तत्परमं धाम द्योतमानं निजश्रिया ।
अनन्तामितमद्वैतमात्मभूतं पुनातु नः ॥ १ ॥
तेजस्त्रैयम्बकं भूयात् भूयसे श्रेयसे मम ।
यदाचामति निश्शेषं भक्तानां भववारिधिम् ॥ २ ॥
नैष्कर्म्यसिध्यभिधया सुधया सुधियां व्यधात् ।
योऽमृतत्वं नमामस्तं सुरेश्वरसुधानिधिम् ॥ ३ ॥
तर्कोदग्रनखोद्भिन्नवादिदैत्यभुजान्तरः ।
प्रह्लादयतु नश्शश्वत् ज्ञानोत्तममृगोत्तमः ४ ॥
चोलेषु मंगलमिति प्रथितार्थनाम्नि
ग्रामे वसन् पितृगुरोरभिधां दधानः ।
ज्ञानोत्तमः सकलदर्शनपारदृश्वा
नैष्कर्म्यसिद्धिविवृतिं कुरुते यथावत् ॥

व्याचिख्यासितायाः श्लोकसन्दर्भरूपायाः नैष्कर्म्यसिद्धेरधिकारिप्रयोजनतत्साधनसंबन्धविषयाणामभावादनारम्भमाशङ्क्य स्वयमेव सम्बन्धोक्तिं कुर्वन्नाचार्यः प्रकरणारम्भसिध्यर्थं क्रमेण तानुपपादयति । आब्रह्मस्तम्बपर्यन्तैरित्यादिना ॥

End:

मूलं ॥

वेदान्तोदरवर्तिभास्वदमलं ध्वान्तच्छिदस्मद्धियो
दिव्यं ज्ञानमतीन्द्रियेऽपि विषये व्याहन्यते न क्वचित् ।
यो नो न्यायशलाकयैव निखिलं संसारबीजं तमः
प्रोत्सार्याविरकार्षीद्गुरुगुरुः(?) पूज्याय तस्मै नमः ॥ ७७ ॥

सम्बन्धोक्तिरियं साध्वी प्रतिश्लोकमुदाहृता ।
नैष्कर्म्यसिद्धेर्ज्ञात्वेमां व्याख्या तस्य भवेद्ध्रुवम् ॥ ७६ ॥

व्याख्या ॥ किङ्कुर्वन्नाविरकार्षीत्त्राह ॥ सकलसंसार-
बीजं तमो न्यायशलाकया प्रोत्सारयन् य एवमाविरकार्षी-
त्तस्मै नमः इति सम्बन्धः । निवृच्छार्दूलविक्रीडितमेतत्
न्यूनाधिकेन निवृद्भूरिजाविरित्युक्तत्वात् ॥ ७७ ॥

......स्थानक्षमतात्पर्यपरिज्ञाने किङ्कारणमित्याशङ्का-
यां सम्बन्धोक्तिरेवेत्याह — सम्बन्धोक्तिरिति ॥

पदकशतहतकुमारिल-
सौगतगुर्वक्षपादकणभक्ष्यः ।
यमनियमनिलयधिषणो
जयति श्री सत्यबोधा[चा]र्यः ॥ १ ॥

वस्तुख्यातिविघातिवादितिमिरं नैष्कर्म्यसिद्धिस्फुट-
व्याख्याचन्द्रिकया विधूय सुधियां संदृष्टिमुन्मीलयन् ।
अन्तस्सम्भृतशान्तिवेदनसुधोद्धो(द्यो)तः समुद्यातते
सर्वज्ञाश्रमचन्द्रमास्त्रिजगतीसर्वज्ञचूडामणिः ॥ २ ॥

Colophon:

मूलम् ॥ इति श्रीमच्छङ्करभगवत्पूज्यपादशिष्य श्रीमत्सुरेश्वरा-
चार्यविरचितायां सम्बन्धोक्तौ चतुर्थोऽध्यायः सम्पूर्णमस्तु ॥
व्याख्या ॥ इति श्रीमहोपाध्यायज्ञानोत्तममिश्रविरचितायां नैष्क-
र्म्यचन्द्रिकायां चतुर्थोऽध्यायः समाप्तः ॥

Subject: Naiṣkarmyasiddhi, with the commentary Naiṣ-
karmyacandrikā 1-4 Adhyāyas.

Remarks:—The Ms. is in a fairly good condition. This is a Ms. of the text of Sureśvara's Naiṣkarmyasiddhi with the commentary called Candrikā by Jñānottamamiśra. The text along with the commentary was published in Benares Sanskṛt Series in 1904. The Bhandarkar Research Institute Poona has recently brought out a critical edition of this work.

---

## ॥ पञ्चकोशविवेकः ॥

## 7550. PAÑCAKOŚAVIVEKAḤ.

Ms. Not noticed by Burnell No. 15570 c.

Substance—Paper. Size—16¼ × 1½ inches. Sheets—24 (235-258). Lines—5 to a Page. Script—Telugu. No. of Granthas—480. Author—? Complete. Not printed.

Beginning:

श्री रामचन्द्राय नमः ॥

किं रूपाः पञ्चकोशाः स्युः का वा यद्व्यतिरिक्तता ।

आत्मनश्चेति तत्सर्वं सदृष्टान्तं विचार्यते ॥

आत्मकु पञ्चकोशालकण्टेनु व्यतिरिक्तत्वमु यदुवलेननि

विचारिम्पुचुन्नारमु ॥

End:

भूतभौतिकभावेषु स्वकार्येषु सदात्मना ।

व्यापीदृष्टस्ततो ह्यात्मा देशाभाव परिच्छुतिः ॥

अदेहित्वादनादित्वादवाच्यत्वान्न विद्यते ।

वर्तमानागतागामिकालेष्वप्यपरिच्छुतिः ॥

सर्वाभिन्नस्वरूपेण सर्वात्मत्वात्सदात्मनः ।
सर्वेभ्यो वस्तुजालेभ्यः परिच्छित्तिर्न विद्यते ॥

न व्यापित्वाद्देशतोऽन्तो नित्यत्वान्नापि कालतः ।
न वस्तुतोऽपि सर्वात्म्यात् आनन्त्यं ब्रह्मणि त्रिधा ॥

अखण्डात्माऽहमेवायं इत्येवं यो विजिज्ञिवान् ।
स सर्वसंमृतेर्मुक्तो ब्रह्मानन्दं समश्नुते ॥

किमनेन बहूक्तेन निर्णीतौ द्वौ महात्मभिः ।
अविचाराद्धि संसारो विचारान्मोक्ष इत्यपि ॥

प्रमादादप्रमादाद्वा यदज्ञानान्मयेरितम् ।
तदभ्यन्तु(?) समालोक्य पण्डिताः समदर्शिनः ॥

श्री गुरुचरणार्पितमस्तु ॥

Subject: Pañcakośaviveka. This is a short treatise dealing with Pañcakośas.

Remarks:—The Ms. is in good condition. The other works contained herein are:— 1. Brahmavidyāsudhārṇava 1—174. 2. Adhyāropaṇam 175—234. The author of this work seems to be a Telugu Brahmin.

---

॥ पञ्चकोशविवेकव्याख्या ॥

## 7551. PAÑCAKOŚAVIVEKAVYĀKHYĀ.

P. A. Collection No. 114.

Substance—Paper. Size—$12\frac{1}{4} \times 4\frac{3}{4}$ inches. Sheets—16. Lines—8-9 to a Page. Script—Devanāgarī. No. of Gran-

thas—225. Author—Rāmakṛṣṇa. Complete. Not printed.

Beginning:

श्रीमहागणाधिपतये नमः । श्रीगुरुभ्यो नमः ॥

नत्वा श्रीभारतीतीर्थविद्यारण्यमहेश्वरान् ।

पञ्चकोशविवेकस्य कुर्वे व्याख्यां समासतः ॥

तैत्तिरीयोपनिषत्तात्पर्यव्याख्यानरूपं पञ्चकोशविवेकाख्यं प्रकरणमारभमाणः आचार्यः तत्र श्रोतृप्रवृत्तिसिद्धये सप्रयोजनमभिधेयं सूचयन् सुखं ...चिकीर्षितं ग्रन्थं प्रतिजानीते गुहाहितमिति ।

॥ मू ॥

गुहाहितं ब्रह्म यत्तत्पञ्चकोशविवेकतः ।

बोद्धुं शक्यं ततः कोशपञ्चकं प्रविविच्यते ॥

End:

मू । पुत्रादेशविवक्षायां न पिता न पितामहः ॥

तद्वदेशो नापि जीवः शक्तिकोशविवेचने ॥ ४२ ॥

एवं ब्रह्मवदेवैषः ब्रह्मैव भवति स्वयम् ।

ब्रह्मणा नास्ति जन्मातः पुनरेष न जायते ॥ ४३ ॥

व्याख्या ।

ब्रह्मणस्तावत् जन्म नास्ति । अत एव विद्वानपि स्वात्मनस्तद्रूपत्वावगमात् नैव जायते । न स पुनरावर्तत इति श्रुतेः ।

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता पञ्चकोशविवेकव्याख्या समाप्ता ।

ओं श्रीसाम्बशिवाय परब्रह्मणे नमः ॥

Subject: Pañcakośavivekavyākhyā with text.

**Remarks**:—The Ms. is in a fairly good condition. For details refer No. 7432.

---

## ॥ पञ्चरत्नप्रकाशः (समूलः) ॥

## 7552. PAÑCARATNAPRAKĀŚAḤ—SAMŪLAḤ.

**Burnell's** Catalogue No. 9914 e. Page 95. Left column. Substance—Palm leaf. Size—13×1 inches. Leaves—10 Lines—7 or 8 to a Page. Script—Grantha. No. of Granthas—250. Author—Subrahmaṇya. Complete. Not printed.

**Beginning:**

श्रीगणपतये नमः । ब्रह्मणे नमः ।

प्रणवं प्रणतार्तीनां हरणं शरणं भजे ।
भूरादयस्त्रयो लोका यदुपक्रमसंभवाः ॥

ब्रह्मादिभ्यः श्रीगुरुभ्यो नमोवाक्रमधीमहे ।
जायते यदनुस्मृत्या सद्यो विद्याविमुक्तिदा ॥

स्थूलानर्थांविविधविषयाञ्जागरे विश्वनामा
स्वप्ने सूक्ष्मान्निरतकरणस्तैजसो मानसेन ।

प्राज्ञः सुखावनुभवति यः स्वात्मनैव स्वसौख्यं
तिस्रोऽवस्थाः स्वयमतिपतन् सोऽस्मि स ज्योतिरात्मा ॥

श्रीकृष्णानन्दयोगीन्द्रचरणांबुजरेणुना ।
पञ्चरत्नप्रकाशोऽयं सुब्रह्मण्येन तन्यते ॥

इह खलु तावदतीतानादिभवपरंपराकृतसुकृतसंपदा व-
र्जितपरमेश्वरानुग्रहेणापवर्जितसकलहृदयकलुषतया समाव-
र्जितविवेकवैराग्यशमदमादिसाधनकलापस्य मनुष्यपितृ-
देवलोकसाधनभूतपुत्रकर्मवित्तैषणाभ्यो व्युत्थाय भिक्षा-
मात्राकलितदेहयात्रस्य ।

*  *

तत्राप्यादिश्लोकेनात्मनो देहाद्यभिमानकृतरूपभेदान्व-
क्ष्यमाणयोगोपयोगितया विभज्य दर्शयति ॥

अध्यात्मश्चाधिदैवं प्रति नियतविधास्थूलसूक्ष्माक्रमाया
संभेदोपाधिभेदात्पुरुषमनुगतास्त्रित्रशो रूपभेदाः ।
विश्वो वैश्वानरश्च प्रथमयुगमथो तैजसात्मा च सूत्रं
प्रज्ञात्मा चेश्वरश्चेदपरमथपर(ः)स्यात्तुरीयस्तु साक्षी ॥

End:

इत्यभ्यासक्रमेण प्रशमितमितधीरात्तसर्वात्मभावो
रूढेशात्माभिमानो हृदि निरहमभीमानवृत्तौ सयोगी ।
...यातमस्तं निजमहिमाहितज्योतिरात्मा तुरीयो
निर्वाणैकस्वभावे विहरति परमानन्दपीयूषसिन्धौ ॥

अत्र श्लोके स्थूलदेहे पृथिव्यादिमहाभूतांशान्

 

युक्त एव सन्यावदारब्धं वासनामात्रेण "बालः क्री-
डनकैरिव" यथोपनीतविषयैर्लोकयात्रामनुवर्तेत इत्यर्थः ।
तस्य तावदेव चिरं यावन्न विमोक्ष्ये संपत्स्ये स तत्र प-
र्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा
नोपजनं स्मरन्निदं शरमित्याद्यादिश्रुतिरिति सर्वं शिवम् ॥

शिवाय शिवरूपाय ब्रह्मणे परमात्मने ।
मनस्सङ्कल्पिताङ्गाय नमः श्रीगुरुमूर्तये ॥

श्रीवत्सान्वयवारिधेरुदभवत् यो लब्धविद्यो गुरोः
कृष्णानन्दसरस्वतीयतिवरात्तत्पादुकासक्तधीः ।
यस्मिन्देशिकपादसङ्गिसलिलं ध्वान्तं निहन्त्यान्तरं
सूते वाङ्मयमौक्तिकानि विदुषां धार्याणि कण्ठस्थले ॥

स्यतानि तेन विदुषां प्रीतये देशिकाज्ञया ।
पञ्चरत्नप्रकाशोऽयं सुब्रह्मण्येन वर्णिना ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्दसरस्वतीकरु-
णालेशलब्धविद्येन श्रीवत्सवंशमुक्ताफलेन सुब्रह्मण्येन कृतः
पञ्चरत्नप्रकाशः सम्पूर्णः ॥

बालरामतीर्थस्येयं लिपिः पुस्तकं च ॥

Subject: Pañcaratnaprakāśa, a commentary on Pañcaratna a minor work in Vedānta.

Remarks:—The Ms. is in good condition. For the other works contained herein see remarks under No. 936. Nothing is known about the author except that he belonged to Śrīvatsa-gotra and he was the desciple of one Sri Kṛṣṇānanda who it is believed to be the famous author of Siddhāntasiddhāñjanam.

---

## ॥ प्रणवदीपिका ॥

## 7553. PRAṆAVADĪPIKĀ.

Not noticed by Burnell Ms. No. 15018.

Substance—Paper. Size—$11\frac{1}{2} \times 5\frac{3}{4}$ inches. Sheets—29. Lines—10 to a page. Script—Devanāgarī. No. of Granthas—2180. Author—Brahmānanda. Complete. Not printed.

Beginning:

सच्चिदानन्दरूपं (वै) जयति ब्रह्म निर्गुणम् ।
देवकीसुतकृष्णाय तस्मै श्रीगुरवे नमः ॥ १ ॥

सच्चिदानन्दकृष्णाय शक्तिरूपधराय च ।
सदा पुरुषधारिण्यै ललितायै नमो नमः ॥ २ ॥

स्मृत्वा श्रीगुरुपादाब्जं मोहजालहरं महः ।
सगुणां निर्गुणाञ्चैव कुर्वे प्रणवदीपिकाम् ॥

सदेव सोम्येदमग्र आसीत् * *
सदेवेत्यादिश्रुतिभिर्वर्णितं वस्तु केवलं ।
तदेव ब्रह्म प्रणव इति विद्वद्भिरुच्यते ॥

End:

सद्गुरुकृपया प्रोक्तं स्वस्वरूपं भजाम्यहम् ।
निर्द्वन्द्वो निर्ममो भूत्वा सदा साधुसमागमः ॥ १ ॥
शिष्यं मां श्रीगुरुस्साक्षात्स्वस्वरूपं चकार हि ।
श्रवणादिभिरुत्पाद्य ज्ञानं भ्रमरकीटवत् ॥ २ ॥
एवं विविच्य यो विद्वान् सकृत्प्रणवदीपिकाम् ।
स्वयंप्रणवरूपेण भासयेदखिलं जगत् ॥ ३ ॥
पूर्णं ब्रह्म गुरुः पूर्णः पूर्णोऽहमखिलं जगत् ।
पूर्णं सर्वमिदं ज्ञात्वा पुनरावर्तते कुतः ॥ ४ ॥

Colophon:

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीसच्चिदानन्दगुरुचरणाकिङ्करेण ब्रह्मानन्दाख्यविदुषा विरचिता प्रणवदीपिका सम्पूर्णा ॥

Subject: Praṇavadīpikā with Mahraṭhi commentary.

Remarks:—The Ms. is in good condition.

This author calls himself the desciple of Sacchidānanda and has to be distinguished from the author of the famous Laghucandrikā or Gauḍabrahmānandīya.

---

॥ परमार्थसारः ॥

## 7554. PARAMĀRTHASĀRAḤ.

Burnell's Catalogue No. 4896, Page 93. Right column,

Substance—Paper. Size—$8\frac{1}{2} \times 4\frac{7}{8}$ inches. Sheets—8. Lines—9 to 11 to a Page. Script—Devanāgarī. No. of Granthas—92. Author—Śeṣa. Complete. Printed.

**Beginning:**

श्रीगणेशाय नमः ॥

गर्भगृहवाससङ्कुचि(म्भव)

जन्मजरामरणविप्रयोगदुःखाब्धौ ।

जगदालोक्य निमग्नं

प्राह गुरुं प्राञ्जलिश्शिष्यः ॥ १ ॥

त्वं साङ्गवेदवेत्ता

छेत्ता संशयगणस्य ऋतवक्ता ।

संसारार्णवतरणे

प्रश्नान्पृच्छाम्यहं भगवन् ॥ २ ॥

**End:**

वेदान्तशास्त्रमखिलं

विलोक्य शेषस्तु जगदाधारः ।

आर्यापञ्चाशीत्या

बबन्ध परमार्थसारमिदम् ॥ ८५ ॥

Colophon:

इति श्रीमच्छेषविरचितं परमार्थसारशास्त्रं समाप्तम् ॥

Subject: Paramārthasāra known as Śeṣāryā and Āryāpañcāśīti a short summary in Āryā metre on the principles of Advaita Vedānta.

Remarks:—The Ms. is in a fairly good condition.

This short epitome of the Vedānta in 85 Āryas is in the form of a conversation between a pupil and preceptor, the latter, who is also the author of this work, being supposed to be Ādiśeṣa Bhagavān. Rāghavānanda, a pupil of Kṛṣṇānanda who has commented upon this work, endorses this eponymous authorship.

The work, with the commentary above referred to, has been published as No. 12 in the Trivandrum Sanskṛt Series.

---

## ॥ परमार्थसारः ॥

## 7555. PARAMĀRTHASĀRAḤ.

Burnell's Catalogue No. 10268. Page 168. Left column. Substance—Palm leaf. Size —14⅝ × 1½ inches. Leaves —4 (87-90). Lines—7 to 9 to a Page. Script—Grantha. No. of Granthas—92. Author—Śeṣa. Complete. Printed.

Beginning:

परं परस्याः प्रकृतेरनादि-
मेकन्निविष्टं बहुधा गुहासु ।
सर्वालयं सर्वचराचरस्थ
त्वामेव विष्णुं शरणं प्रपद्ये ॥ १ ॥

आत्माम्बुराशौ निखिलोऽपि लोको
मग्नोऽपि नाचामति नेक्षते च ।

आश्चर्यमेतन्मृगतृष्णिकाभे
भवाम्बुराशौ रमते मृषैव ॥ २ ॥

गर्भगृहवास०

Same as No. 7554.

End and subject—Same as No. 7554.

Colophon: Nil.

Remarks:—The Ms. is in a fairly good condition. At the beginning we have the closing stanzas of chapter 5, of the Sūtagītā.

---

॥ परमार्थसारः ॥

## 7556. PARAMĀRTHASĀRAḤ.

Burnell's Catalogue No. 9804. Page 93. Right column. Substance—Palm leaf. Size—$16\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—5. Lines—6 to a Page. Script—Telugu. No. of Granthas—85. Author—Śeṣa. Incomplete. Printed.

Beginning:

(मनसोऽहंकारविमूर्च्छितस्य चैतन्यबोधितस्येह ।)
पुरुषाभिमानसुखदुःखभावना भवति मूढस्य ॥ २१ ॥

End—Same as No. 7554.

Colophon:

इति श्रीसच्चिदानन्दरूपश्रीसकलजगदाधारश्रीशेषाख्यपरमेश्वरेण कृतं

सर्ववेदान्तसारार्थप्रतिपादकं आत्मपञ्चाशीत्यधिकरणं

सम्पूर्णम् ॥

Subject: Paramārthasāra; 12-85 ślokas.

**Remarks**:—The Ms. is in a fairly good condition.

At the end there is one leaf having the matter of the 4th leaf transcribed since the 4th leaf is decaying.

---

॥ परमार्थसारः ॥

## 7557. PARAMĀRTHASĀRAḤ.

**Burnell's Catalogue No. 9842 b.** Page 84. Left column. Substance—Palm leaf. Size—$18\frac{1}{4} \times 1\frac{3}{8}$ inches. Leaves—1 (21st leaf). Lines—23 only. Script—Telugu. No. of Granthas—60. Author—Śeṣa. Incomplete. Printed.

Beginning—Same as No. 7554.

**End**:

नारायणमात्मानं

ज्ञात्वा सर्गस्थितिप्रलयहेतुं ।

सर्वज्ञस्सर्वगत-

स्सर्वस्सर्वेश्वरो भाति ॥ ६७ ॥

आत्मज्ञस्तरति शुचं

यस्माद्विद्वान् बिभेति न कुतश्चित् ।

मृत्योरपि मरणभयं

न भवत्यन्यत् कुतस्तस्य ॥ ६८ ॥

Colophon: Nil.

Subject: Paramārtha Sāra

Remarks:—The Ms. is in a fairly good condition. For the other works contained herein see under No. 1257. Vol. II.

---

॥ परमार्थसारव्याख्या—समूला ॥

7558. PARAMĀRTASĀRAVYĀKHYĀ—SAMŪLĀ.

Burnell's Catalogue No. 9803. Page 93. Right column. Substance—Palm leaf. Size—17 × 1½ inches. Leaves—26. Lines—10 or 11 to a Page. Script—Grantha. No. of Granthas—1000. Author—Rāghavānanda. Complete. Printed.

Beginning:

श्रीजानकीरमणाय नमः ॥

विघ्नपांसुमवधूय वायुवत्
भक्तहृद्गगनदीप्तिदायिनम् ।
विस्फुरत्कलभवक्त्रविग्रहं
विश्वनाथमनिशं भजामहे ॥ १ ॥

* *

श्रीमच्छङ्करमार्गमध्यवसतिः शाखाशतालङ्कृतः
संसारार्कगभस्तितप्ततनुभिः संसेविताङ्घ्रिर्जनैः ।
कृष्णानन्दमहीरुहोमृतरसापूर्णैरपूर्वैः फलैः
चित्तप्रीतिमुपासकेषु जनयन् जीयान्महीमण्डले ॥ २ ॥

अशेषोपनिषत्सिद्धवस्तुतत्त्वानुगामिनी ।
राघवानन्दमुनिना शेषार्येह विमृश्यते ॥

परमार्थसारसंज्ञाग्रन्थं चिकीर्षुराचार्यस्तस्याविघ्नपरिसमाप्तिप्रचयगमनाभ्यां + लक्षणमनुबन्धचतुष्टयमाविष्करोति ॥

परम्परस्याः + शरणं प्रपद्ये ॥ १ ॥

End:

वेदान्तशास्त्र + परमार्थसारमिदम् ॥

* *

इदं परमार्थसाराख्यं प्रकरणं बबन्ध कृतवानित्यर्थः । तस्मादिदं प्रकरणं यस्तु साधनचतुष्टयसम्पत्तिपूर्वकं गुरुमुखाच्छृणोति तस्य ब्रह्मात्मसाक्षात्कारो भविष्यतीत्येतत्तप्तपरशुधारणपूर्वकमपि वक्तुं शक्यत इत्यभिप्रायः ॥

Colophon:

शेषार्या समाप्ता ।

सर्वज्ञचूडामणिमीश्वराणामीशानमिन्दीवरकोमलाङ्गम् ।
कारुण्यलावण्यसुधासमुद्रं श्रीजानकीजानिमहं भजामि ॥

Subject: Paramārthasāravyākhyā, with text.

Remarks :—The Ms. is in a fairly good condition, but for a small portion that has been destroyed.

Rāghavānanda, disciple of Kṛṣṇānanda, lived in the latter half of the 17th century.

This work has been published as No. 12 in the Trivandrum Sanskṛt series.

From the introduction to the above edition we come to know that the author has written a commentary on Śrī Bhāgavata known as Kṛṣṇapadī.

---

॥ परमार्थसारव्याख्या ॥

## 7559. PRAMĀRTHASĀRAVYĀKHYĀ.

Burnell's Catalogue No. 9805. Page 98. Right column. Substance—Palm leaf. Size—16⅓ × 1½ inches. Leaves—48 (168-215). Lines—6 to a Page. Script—Telugu. No. of Granthas—1000. Author—Rāghavānanda. Complete. Printed,

Beginning, end and subject—Same as No. 7558.

**Colophon**: Nil.

**Remarks**:—The Ms. is in good condition. After the colophon are repeated some verses of the text from the beginning.

---

॥ ब्रह्मविद्यासुधार्णवः ॥

## 7560. BRAHMAVIDYĀSUDHĀRṆAVAḤ.

Not noticed by Dr. Burnell. No. 15570 a.

Substance—Palm leaf. Size—16½ × 1½ inches. Leaves—174. Lines—5 to a Page. Script—Telugu. No. of Gran-

thas—3500. Author—Paramānandatīrthaḥ. Complete. Not printed.

Beginning:

शुभमस्तु । अविघ्नमस्तु ।

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं
विश्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥ १ ॥

जगदंकुरकन्दाय सच्चिदानन्दमूर्तये ।
गलिताखिलभेदाय नमः शान्ताय तेजसे ॥ २ ॥

नमः परमशान्ताय सच्चिदानन्दमूर्तये ।
श्रीदत्तात्रेययोगीन्द्रचन्द्राय परमात्मने ॥ ३ ॥

श्रीसूक्तिर्यस्य दत्तप्रतिपदयुगलीचिन्तनात्प्राक्तनोक्ति-
र्वेणीबन्धे समिन्धे विकचविचकिलामोदमापादयन्ती ।
नित्यानन्दानुसन्धाजनितसुखरसास्वादसामोदचेताः
योगीन्द्राणां विनेता स जयति परमानन्दतीर्थव्रतीन्द्रः ॥

तत्त्वम्पदविवेकोक्तिं परमानन्ददेशिकः ।
कुरुते बालबोधाय यथा वेदान्तपद्धतिः ॥

श्रीमद्दत्तात्रेयगुरुचरणसरोजमत्तमधुकरायमाणुलै वि-
मलतत्त्वार्थरहस्यवेदुलैन परमानन्दतीर्थुलु समस्तलो-

कोपकारार्थंगानु वेदान्तरहस्यग्रन्थम्नु रचिसिम्प निश्च-
यिञ्चि ।

यावदायुस्त्रयो वन्द्याः वेदान्तो गुरुरीश्वरः ।
आदौ बोधप्रसिध्यर्थं कृतघ्नत्वापनुत्तये ॥

End:

अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः ।
आनन्दोऽहमशेषोऽहं अजोऽहममृतोऽस्म्यहम् ॥
नित्योऽहं निर्विकल्पोऽहं निराकारोऽहमव्ययम् ।
सच्चिदानन्दरूपोऽहं परिपूर्णोऽस्मि सर्वदा ॥

इट्लनि आत्मानुभवशास्त्रम्नु निरूपिंचवडेनु ।
परमानन्दयतीन्द्रो सूक्तै(ः) व्याप्तै(ः) त्रयोदशप्रकरणतः ।
आरवितारकमेषा टीका भुवि चित्प्रकाशिका जयतु ॥(?)

परमानन्दतीर्थीय ब्रह्मविद्यासुधार्णवात् ।
आनन्दामृतचन्द्रोऽयं ...(उदेतु सहजो नृणाम्) ॥

Colophon:

इति श्रीपरमहंसपरिव्राजकाचार्यवर्यपरमानन्दतीर्थयतिकृतौ ब्रह्म
विद्यासुधार्णवे.........निरूपणं नाम त्रयोदशप्रकरणं
समाप्तम् ।

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

Subject: Brahmavidyāsudhārṇava with an explanatory commentary in Telugu language 1-13 prakaraṇas.

Remarks:—The Ms. is in a good condition. The author has written in Telugu a centum of verses by name Dattātreya-śatakam and dedicated it to his Guru Dattātreya. Refer No. 409 Telugu section. The author appears to be a Telugu Brahman who became a sanyāsin in the later stages of his life. For the other works contained herein see under No. 7550.

---

॥ मध्वमतविध्वंसः ॥

## 7561. MADHVAMATAVIDHVAMSAḤ.

S. S. Collection No. 90 a.

Substance—Palm leaf. Size—15 × $1\frac{3}{4}$ inches. Leaves—18. Lines—10 to a Page. Script—Telugu. No. of Granthas—540. Author—Bhaṭṭojibhaṭṭa. Complete. Not printed.

Beginning:

श्रीरामाय परमात्मने नमः । हरिः ओं ।

श्रीनृसिंहाय नमः ।

विश्वेशतुष्टयै विजयपुरे पत्रमुखेन यः ।
रचितो मध्वविध्वंसः सक्रमेणेह लिख्यते ॥

मध्वमतदूषणभूषणविचारः पत्रमुखेन कर्तव्य इति समयबन्धे सति मध्वमतदूषणपरं पत्रं प्रथमं प्रेषितम् । तच्चेत्थं । ओं । 'अथातो ब्रह्मजिज्ञासा ।' ब्रह्ममीमांसा-

शास्त्रमारम्भणीयं न वेति विशये नेति प्राप्तम् । निर्विषय-त्वात् । न तावदस्य सविशेषं ब्रह्म विषयः । तत्र माना-भावात् ।

End:

अथाद्वैतवादी सहृदयाः परिभावयन्त्विति । तथैव यथोक्तमुपाश्नीति ...अनुकूलतर्केण हेतोस्साध्यत्वे नि-र्णीते साध्यव्याप्यहेत्वव्यापकत्वेन उपाधिस्साध्या व्या-पकत्वात् । अत एव सत्प्रतिपक्षोऽपि परास्तः । यदप्युक्तं प्रत्यक्षबाधितानीति तदपि न पारमार्थिकत्वं । ननु प्रत्य-क्षगम्यत्वात्कथमन्यथावताराणां भ्रमसिद्धो भेदः पुराणे-ष्वनूद्यत इति त्वाचार्यैरुक्तम् । यदपि भेदानुमानरूपन्य-सनं तदपि न लाघवतर्कोपब्रह्मकतैत्तिरैक्यश्रुत्यादिभिः(?) बाधः न प्रयोजकत्वाच्च ब्रह्मणः सर्वज्ञत्वेन तदननुसंहित-दुःखाप्रसिद्धेः द्वितीयहेतोः स्वरूपासिद्धेश्च । अत एव पूर्व-हेत्वा ........वेति यद्वेत्यादि च परास्तम् । हेतुभ्यामिति वक्तव्ये हेत्वोरिति षष्ठीप्रयोगश्चासङ्गत इति स्पष्टमेव । यदप्युक्तम् अनुगतजातीत्यादि तन्न । बाधाप्रयोजकत्वादि स्पष्टत्वात् । जातीत्यहेतोः विवेचनार्थविशेषणत्वादाका-ङ्क्षत्वेन अर्थान्तरत्वाच्चेति दिक् ॥

Colophon:

इत्यद्वैतवादिनो नवमाह्निकम् ।

दशमे दिवसे माध्वः तदीयेनैवचक्षुकः (?) ।

अशुद्धवादितां वीक्ष्य धिक्कृतो विरतिं गतः ॥

पदवाक्यप्रमाणज्ञैः गुणग्राहैर्मनीषिभिः ।
एवं मध्वमतध्वंसः सादरं परिभाव्यताम् ॥

यत्करोषीति वेचनं स्वकीयमनुपालयन् ।
भगवान् स्वीकरोत्वेनां वाक्यमालां महेश्वरः ॥

इति श्रीभट्टोजिभट्टविरचितो मध्वमतध्वंसः समाप्तः ।

श्रीगणपतये नमः ।

चित्रांश्वब्दे कुम्भमासे पौर्णम्यामिन्दुवासरे ।
मध्वविध्वंसनं नाम नञ्जुण्डेन ह्यलेखि यत् ॥

श्री हयग्रीवाय नमः ॥

Subject: Madhvamataviddhvamsa, a hostile criticism of the Dvaita school of Vedânta vigorously supporting the Advaita school.

Remarks:—The Ms. is in good condition. The other work contained herein is Bhedadhikkâra.

This polemic against the Mâdhvas is by the famous Grammarian, Bhaṭṭoji. This work is an independent treatise refuting the Madhva doctrines. That the author was in the Vizianagar Court is evidenced by the first verse. It is said that the famous Appayya Dîkṣita his guru introduced him there.

---

## ॥ महावाक्यार्थदर्पणः ॥

## 7562. MAHĀVĀKYĀRTHADARPAṆAḤ.

Burnell's Catalogue No. 6494. Page 94. Left column.

Substance—Paper. Size—10×4¾ inches. Sheets—(1-32 & 71-88). Lines—10 to a Page. Script—Devanāgari. No. of Granthas—1000. Author—Bhāratītīrtha-śiṣya. Incomplete.

**Beginning:**

श्रीरस्तु ।

दर्शनं श्रवणं ज्ञानं यत्र नान्यस्य विद्यते ।
अखण्डैकरसं शान्तं ब्रह्म तत्समुपास्महे ॥

श्रीविघ्नेड्विधिविष्णुशंकरगुहान्वाणीं रमां पार्वतीं
इन्द्रं वह्निमिनात्मजं सनिर्ऋतिं तं पाशिनं मारुतम् ।
सोमं शूलिनमर्कचन्द्रकुजवद्देवे....(?)शुक्रार्कजान्
राहुं केतुमृषीन् सुरान्द्विजगुरून्वन्दे वचस्सिद्धये ॥ २ ॥

श्रीगुरुं भारतीतीर्थं विद्यारण्यं मुनीश्वरम् ।
भक्त्या प्रणम्य क्रियते महावाक्यार्थदर्पणः ॥ ३ ॥

अनेकजन्मार्जितभूरिपुण्यैः पक्वान्तरात्मा भगवत्प्रसादात् ।
यः कश्चिदेवात्र विपश्चिदर्थे विरज्य मुक्तौ यतते विवेकी ॥ ४ ॥

End:

देहेन्द्रियादौ कर्तव्ये ममाहंभाववर्जितः ।
औदासीन्येन यस्तिष्ठेज्जीवन्मुक्तः स उच्यते ॥

जीवन्मुक्तिरनेनैव निर्विकल्पसमाधिना ।
मृतेः सिध्यति धीरस्य कृतार्थस्य महात्मनः ॥

Subject: Mahāvākyārthadarpaṇa an elaborate commentary

in verse on the 12 Mahāvākyas.

Remarks:—The Ms. is in a fairly good condition.

The manuscript wants conclusion. A work by name Mahāvākyadarpaṇa which is ascribed to Śaṅkara is published with a metrical Telugu translation from Ellore by K. Pattābhirāmaśarma. The supplementary catalogue of the British Museum at page 1135 mentions this work to be the same as the present Ms. The verse

"श्रीगुरुं भारततीर्थं विद्यारण्यं मुनीश्वरं"

lends support to the view that Bhāratītīrtha and Vidyāraṇya are different persons.

---

## ॥ महावाक्यरत्नावली ॥

## 7563. MAHĀVĀKYARATNĀVAḶĪ.

P. S. Collection No. 35.

Substance—Paper. Size—12×6 inches. Sheets—23. Lines—11 to a Page. Script—Devanāgarī. No. of Granthas—700. Author—Rāmacandrendra. Complete. Printed.

Beginning:

श्रीगणेशाय नमः ।

शुक्लांबरधरं + विघ्नोपशान्तये ॥

इहाष्टोत्तरशतोपनिषत्सारसंग्रहभूताष्टोत्तरसहस्रवाक्यरत्नावली विलिख्यते ।

ओम् । यो विश्वादिविदेहान्तमहावाक्यार्थविग्रहः ।
श्रीरामचन्द्ररूपाय तस्मै भूतात्मने नमः ॥

यः पूज्यो यतिभिः स्वधर्मनिरतैः ध्यायन्ति यं योगिनः ।
येनात्तं निगमान्तवेद्यमनिशं यस्मै हविर्दीयते ।
यस्मात्स्थावरजङ्गमं समभवत् यस्यांशमात्रोऽवरो
यस्मिन् लीनमिदं प्रणौमि सततं तं वासुदेवं गुरुम् ॥

नत्वा श्रीवासुदेवेन्द्रपादपङ्केरुहद्वयम् ।
ग्रथ्यते वै महावाक्यरत्नावलिरियं मया ॥

End:

एवं विध्याद्यदेहान्तमहावाक्यकलेवरः ।
वस्तुतो निर्विशेषात्मा रामचन्द्रोऽस्म्यहं शिवः ॥

यन्महावाक्यसिद्धान्तमुक्तिचित्तैकगोचरम् ।
वासुदेवेन्द्रसंज्ञं तं नौमि सर्वात्मकं महः ॥

Colophon:

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीवासुदेवेन्द्रसरस्वतीचरणकमल-
मकरन्दतृप्तस्वान्तरामचन्द्रेण प्रथितईशाद्यष्टोत्तरसहस्रम-
हावाक्यरत्नावली संपूर्णा ।

Subject: Mahāvākyaratnāvalī.

Remarks:—The Ms. is in good condition.

This interesting and informing collection of Upaniṣadic texts is the work of Rāmacandrendra, pupil of Vāsudevendra. The author should therefore have flourished in the 18th century.

The work has been published in Benares, edited by Gourī-nāth Pāṭhaka.

## ॥ महावाक्यरत्नावली ॥

## 7564. MAHĀVĀKYARATNĀVALĪ.

S. S. Collection No. 96.

**Substance**—Śrītāla. Size—9×2 inches. Leaves—92. Lines—11-12 to a Page. Script—Telugu. No. of Granthas—3000. Author—Rāmacandrendra. Complete. Printed.

Beginning, end, colophon and subject—Same as No. 7563.

**Remarks**:—The Ms. is in a good condition. In the last leaf are given the numbers of granthas contained in each prakaraṇa.

---

## ॥ महावाक्यविवरणम् ॥

## 7565. MAHĀVĀKYAVIVARAṆAM.

**Burnell's Catalogue** No. 6492. Page 97. Left column.

**Substance**—Paper. Size—9½×4 **inches**. Sheets—58. Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—575. Author—Kaivalyāśramin. Incomplete. Printed.

**Beginning:**

श्रीगणाधिपतये नमः ।

श्रीतुलजाभवान्यै नमः । श्रीगुरुभ्यो नमः ॥

समस्तविषयवासनाविनिर्मुक्तः स परमहंसः केवलं निर्वि-

शेषब्रह्मचैतन्यमात्रेऽवतिष्ठते । स परमहंसः यत्रकुत्रचापि-

ष्ठति । किं करोति । केवलं द्वादशमहावाक्यविचारं करोति ।

तस्मान्महावाक्यं कीदृक् । तत्र औपनिषदानि वाक्यानि । आदौ तावदृग्वेदस्य ।

End:

'वाङ्मनोगोचरातीतः' इत्याथर्वणवाक्यगतात्मकशब्दे निर्णयेन काण्डत्रयमन्त्रकाण्डज्ञानकाण्डकर्मकाण्डब्रह्मोपासनाय उपयुज्यते । परापश्यन्तीमध्यमावैखरीरूपेण व्यक्तमपि ब्रह्मशब्दस्वरूपेण आत्मानमभिव्यक्तिं(क्तं) करोति । अथ...... ।

Colophon: (Page 56 a)

अथर्वणवेदस्य वाक्यगतात्मशब्दनिर्णयो नाम एकादशस्सिद्धान्तः ।

Subject: Mahāvākyavivaraṇā, otherwise known as Vedānta Sāra Pañcīkaraṇa a commentary on the 12 Mahāvākyas, in 12 chapters; wants a little in the end.

Remarks:—The Ms. is in a fairly good condition. On the face sheet is given—

कैवल्याश्रमकृतमिदं पुस्तकं वेदान्तसारपञ्चीकरणम् ।

महाराजतुलजामहाराजस्य सम्पूर्णम् । शंकरार्पणमस्तु ।

On the last sheet is given—

श्रीरस्तु । इदं पुस्तकं वेदान्तसारपञ्चीकरणम् ।

महाराजतुलजाराजस्य ।

This work is published at Bombay with a Hindi commentary by Ramakṛṣṇānandagiri.

———

## ॥ महावाक्यविवरणम् ॥

## 7566. MAHĀVĀKYAVIVARAṆAM.

Burnell's Catalogue No. 6489. Page 94. Left column. Substance—Paper. Size—8 × 4¼ inches. Sheets—22. Lines—10 to a Page. Script—Devanāgarī. No. of Granthas—300. Author—Kaivalyāśramin. Incomplete. Printed.

**Beginning:**

श्रीगणेशाय नमः ॥ गुरुर्जयति ।

श्रीदेवदत्तगुरुपादुकां पूजयामि । महाप्रसादसिद्धिरस्तु ।

आत्मारामप्रकाशपरमात्मने नमः ।

सम(?) ॥ इदं द्वादशमहावाक्यम् । समस्तविषयवासनाविनिर्मुक्तः परमहंसः ।

Same as No. 7565.

End.

अतः परं सामवेदवाक्यनिर्णयः कथ्यते । सामवेदवाक्यपदत्रयम् । तत् त्वं असि । असिपदेन ब्रह्म । तत्र जीवेश्वरयोः रूपाद्यवच्छेदः । ब्रह्मणस्तु नास्ति । ब्रह्मणो ह्युपाध्यवच्छेदश्चेत् । तत्र श्रुतिः । असि तत् । तत्पदेनेश्वरः । त्वंपदेन जीवः ।

**Colophon:**

असिमशब्दनिर्णयं नाम षष्ठप्रकरणम् ।

Subject: **Mahāvākyavivaraṇa.**

Remarks:—The Ms. is in good condition.

---

॥ महावाक्यविवरणव्याख्या ॥

# 7567. MAHĀVĀKYAVIVARAṆA-VYĀKHYĀ.

Burnell's Catalogue No. 6193. Page 97 ?. Left column. Substance—Paper. Size—$8\frac{1}{2} \times 4\frac{1}{4}$ inches. Sheets--117 (41-46 & 118-123 are missing out of 129). Lines—6 to a Page. Script—Devanāgarī. No. of Granthas –1150. Author—? Incomplete. Not printed.

**Beginning:**

श्रीगणेशाय नमः ॥

वेदान्तसारसर्वस्वं पाषण्डा नैव मन्यते ।
किं जानीयुरिमे पापाः हता स्वीयासदुक्तिभिः ॥

पाषण्डानाममुक्तानां नृणामुत्पथगामिनां ।
एतद्विज्ञानसर्वस्वं मतिमान्न प्रकाशयेत् ॥

शुद्धानां गुरुभक्तानां श्रद्धालूनां सुशीलिनां ।
दयावतां सुशिष्याणां ज्ञानमेतत्प्रकाशयेत् ॥

विधिवदुपसन्नस्य नमस्कारं कुर्यादित्यर्थः । मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यार्थं विचारयामः । महावाक्यं नाम किं । "तत्त्वमसि" "अहं ब्रह्मास्मि" "अयमात्मा ब्रह्म"

**End:**

असत्कथमारोपयेदिति । इमं सन्देहं ममापनोदयेति

पृष्टः सद्गुरुराह । अनुवृत्तिमुखे...... ।

Subject: Mahāvākyavivaraṇavyākhyā.

Remarks:—The Ms. is in a fairly good condition. Dr. Burnell has left this as an unidentified fragment.

---

॥ मोक्षसाम्राज्यलक्ष्मीतन्त्रम् ॥

## 7568. MOKṢASĀMRĀJYALAKṢMĪTANTRAM.

**Burnell's** Catalogue No. 9800. Page 95. Left column. Substance—Palm leaf. Size—16¾ × 1½ inches. Leaves—208. Lines—8 to a Page. Script—Telugu. No. of Granthas—8000. Author—Kāṇḍadvayātītayogin. Complete. Not printed.

**Beginning:**

श्रीपार्वती ॥

श्रुतस्सम्यक्त्वया देव शिवदीक्षाविधिक्रमः ।

सर्ववेदान्तसारं मे सङ्ग्रहेण वदाधुना ॥

वेदान्तकृद्वेदवेद्यः त्वमेवान्यो न कश्चन ।

अद्वितीयोप्यनन्तोसि गुणवानासि निर्गुणः ॥

तस्माद्वेदान्तसर्वस्वं वद मे वदतां वर ।

श्रीशिवः ॥

शृणु पार्वति वक्ष्यामि ब्राह्मणत्यन्तपावनम् ।

वेदान्तसारसिद्धान्तं रहस्यं मुक्तिसाधनम् ॥

मार्गशीर्षे शुद्धपक्षे त्रयोदश्यां रवेर्दिने ।

काण्डद्वयातीतयोगी पर्वेण युतवत्सरे ॥

लिखितं प्रस्तरमिदं वेदवेदान्तवेदिना ।

सामादिसर्ववेदानां राजोपनिषदुच्यते ॥

यया तद्वाच्यते ब्रह्म सामराज उदाहृतः ।

अन्यच्च ॥

विद्यापीठमधिष्ठिते भगवति श्रीसामराजाभिधे

तीर्थे शिष्यपरम्पराजितमतिर्भूत्वा च वाचस्पतिम् ।

व्यासं जैमिनिमक्षपादमथ च श्रीदक्षिणामूर्तिम-

प्याक्षेप्तुं यतते तदा स भगवान् मौनं विधत्ते शिवः ॥

एवं ग्रन्थकर्ता स्वगुरुनमस्कारं कृत्वा वेदान्तसारं विलिखितुमारभते —

श्रीगुरुभ्यो नमः ।

अखण्डसच्चिदानन्दमवाङ्मनसगोचरम् ।

आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥ १ ॥

किञ्च ॥

अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः ।

गुरूनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥

वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च ॥

End:

तद्युक्तस्तन्मना युक्तस्तद्याजी तत्परो भवेत् ।
एवमेतत्पुराख्यं वैष्णवं धर्मशासनम् ॥
मया ते कथितं राजन् पवित्रं पापनाशनम् ।
चित्तं यस्य सदा विष्णुमप्रमत्तः कुरूद्वह ॥
तेन गच्छसि नान्येन तद्विष्णोः परमं पदम् ॥

Colophon:

इत्यश्वमेधिकवैष्णवधर्मशास्त्रे काण्डद्वयातीतयोगिविरचिते मोक्षसाम्राज्यलक्ष्मीतन्त्रे सच्चिदानन्दलहरीपरिणये पञ्चोत्तरशततमोऽध्यायः, धातुसंवत्सरवैशाखबहुलत्रयोदशीसोमवारं नाडु प्राशिन्दि । श्रीमामराजगुरवे नमः ॥

काण्डद्वयातीतयोगिकविना लिखिता कथा ।
अबद्धा वा सुबद्धा वा सा कथा क्षेमदा नृणाम् ॥

(Leaf No. 10)

इति श्रीकाण्डद्वयातीतयोगिविरचिते मोक्षसाम्राज्यलक्ष्मीतन्त्रे सच्चिदानन्दलहरीपरिणये वेदान्तसारसङ्ग्रहः ॥

(Leaf No. 64)

इति श्री + परिणये भगवत्पादविरचितश्रीमत्सनत्सुजातीयशास्त्रविवरणे श्रीमद्भारते चतुर्थोऽध्यायः ॥

Subject: Mokṣasāmrājyalakṣmītantra.

This work is only a compilation of many works with a few introductory verses of the author. The author is respon-

sible only for the introductory verses and arrangements of the subject. Detailed contents of the Ms. are given in a loose sheet at the beginning.

The following table shows the works or the parts of the works compiled herein:—

| | | | |
|---|---|---|---|
| 1 | वेदान्तसारसङ्ग्रहः by Sadānanda | | 1—10 |
| 2 | उत्तरगीता सव्याख्या by Kāṇḍadvayātītayogin | ? | 10—29 |
| 3 | सनत्सुजातीयं सभाष्यम् by Śrī Śaṅkarācarya | | 29—64 |
| 4 | महावाक्यविवेकव्याख्या by Rāmakṛṣṇa | | 64—66 |
| 5 | अश्मकगीता — शान्तिपर्व (राजधर्म महाभारत) | | 66—68 |
| 6 | षोडशराजचरितम् Do Do | | 68—76 |
| 7 | पञ्चदशी सव्याख्या; द्वैतविवेक, नाटक & तृप्तिदीप | | 76—122 |
| 8 | धर्मानुशासनम्; (अश्वमेधपर्व महाभारत) | | 123—124 |
| 9 | अनुगीता Do Do | | 125—155 |
| 10 | वैष्णवधर्मशास्त्रम् Do Do | | 155—203 |

Remarks:—The Ms. is in a fairly good condition.

There are seven loose leaves at the beginning and 2 loose leaves at the end dealing with vedānta.

---

## ॥ मोक्षसाम्राज्यलक्ष्मीतन्त्रम् ॥

## 7569. MOKṢASĀMRĀJYALAKṢMĪTANTRAM.

Burnell's Catalogue No. 12188, Page 208. Right column.

Substance—Palm leaf. Size—$16\frac{3}{8} \times 1\frac{1}{2}$ inches. Leaves—228. Lines—7-9 to a Page. Script—Telugu. No. of Granthas—5200. Author—Kāṇḍadvayātītayogin. Complete. Not printed.

Beginning:

श्रीशिव ॥

कश्चिद्धर्माः श्रुता देवि त्वया मोक्षैकसंश्रयाः ।
अध्यात्मशास्त्रमखिलं योगं सांख्यं तथैव च ॥

वर्णाश्रमाणां धर्मश्च कालस्यापि च लक्षणम् ।
ध्यानश्च जगदुत्पत्तिं व्यासाद्यैरुपवर्णितम् ॥

शुकानुप्रश्नमारभ्य सेतिहासं सलक्षणम् ।
यावच्छुकानुपतनं तावद्धर्मा मयोदिताः ॥

सह्यश्युतास्त्वया (?) देवि किं भूयः श्रोतुमिच्छसि ।
विदुरेण यथोद्दिष्टं धृतराष्ट्राय पृच्छते ॥

तत्सर्वमखिलं देवि त्वया समुपवर्णितम् ।
सनत्सुजातकथितं गुह्यमध्यात्मसंश्रितम् ॥

सारं वेदान्तशास्त्रस्य धृतराष्ट्राय पृच्छते ।
यथा सनत्सुजातीयमध्यात्मं श्रूयते त्वया ॥

तदा मुक्तिर्भवत्येव नान्यच्छ्रोतव्यमस्ति ते ।
अन्येपि संशयाः केचिद्वर्तन्ते हृदि ते शिवे ।
तत्पृच्छस्व महादेवि सर्वं सम्यग्वदामि ते ॥

इममर्थं पुरा देवि पृष्टवान् रघुनन्दनः ।
मामजानन्निव शिवे योऽयं प्रश्नस्त्वयेरितः ॥

मद्गीतायां मया पूर्वं जीवरूपमुदीरितम् ।
तदिदं वर्तयिष्यामि समाहितमनाः शृणु ॥

मद्गीतायां शिवगीतायामित्यर्थः ॥

End:

तथा च बोधायनः ॥

वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ।
पन्था देयो ब्राह्मणाय गवे राज्ञे ह्यचक्षुष इति ॥

Colophon:

इति श्रीकाण्डद्वयातीतयोगिविरचितमोक्षसाम्राज्यलक्ष्मी-
तन्त्रसच्चिदानन्दलहरीपरिणये कर्मकाण्डे स्मृतिचन्द्रिकायां
अभिवादननिमित्तकथनं समाप्तम् ।

युवसंवत्सरे मासि अमायां सोमवासरे ।
सूर्योपरागे मध्याह्ने योगी काण्डद्वयातिगः ॥

योगिना लिखितन्त्वेतत् मुमुक्षूणां हितावहम् ।

Leaf No. 111

युवसंवत्सर आश्विनशुद्धद्वितीया सोमवासरं नवरात्रियन्दु व्राशिन्दि ॥

Subject: Mokṣasāmrājyalakṣmītantra.

The following table shows the works and the parts of the works compiled herein.

| | | |
|---|---|---|
| I | शिवगीता (VIII-XVI अध्या.) | 1—51 |

| | | |
|---|---|---|
| 2 | ब्रह्मगीता (II—VI, अध्या.) | 52—67 |
| 3 | शिवगीता (VI, VII and I—V अध्या.) | 67—77 |
| 4 | हरिवंशः (180—183 अध्या.) | 78—104 |
| 5 | विष्णुपुराणम् (अं. II अध्या. 13—16) | 104—111 |
| 6 | पराशरगीता ( विष्णुपुराण अंश VI अध्या. 1—8) | 111—129 |
| 7 | वासिष्ठरामायणम् (सर्गः 30—31) | 129—142 |
| 8 | पञ्चदशी सव्याख्या (ध्यानदीपः) | 142—155 |
| 9 | वासिष्ठरामायणम् (सर्ग 23, 22, 21, 34, 26, 27, 28, 42, 37, 36 & 7) | 155—193 |
| 10 | स्कान्दपुराणम् (सेतुमाहात्म्यम् अध्या. 45) | 194—197 |
| 11 | असङ्गात्मप्रकरणम् | 197—203 |
| 12 | आत्मानन्दप्रकरणम् | 203—216 |
| 13 | अभिवादनलक्षणम् (स्मृतिचन्द्रिका) | 216—223 |

Remarks:—A detailed contents of this Ms. is given in a loose sheet at the beginning. This work seems to be the continuation of the author's compilation in the former No. 7568.

---

## ॥ वासुदेवमननम् ॥

## 7570. VĀSUDEVAMANANAM.

Burnell's Catalogue No. 6504. Page 92. Right column. Substance—Paper. Size—14×6 inches. Sheets—42. Lines—10 to a Page. Script—Devanāgarī. No. of Granthas—1200. Author—Vāsudevayatīndra. Complete. Printed.

Beginning:

श्रीगणेशाय नमः ॥

ब्रह्मविद्यासम्प्रदायकर्तृभ्यो महद्भ्यो नमः ।

योऽवतीर्ण इहाचार्यरूपेण यतिनां मुदे ।
श्रीमन्नारायणं वन्दे तं हरिं करुणानिधिम् ॥

मननाख्यं प्रकरणं वासुदेवयतीश्वरैः ।
रचितं विस्तरेणाथ संग्रहेण प्रकाश्यते ॥

* *

End:

एतावदेवाचार्यैरत्र वक्तव्यं शिष्येण च श्रोतव्यम् ।
इतः परं वक्तव्यं श्रोतव्यं च नास्तीति सिद्धम् ।

Colophon:

इति श्रीपरमहंसपरिव्राजकाचार्यवासुदेवेन्द्रविरचिते मननाख्यप्रकरणे द्वादशवर्णकं समाप्तम् ।

इति श्रीवासुदेवेन्द्रविरचितो मननाख्यग्रन्थः समाप्तः ।

अंगिरोब्दे नभोमासि पञ्चम्यां शुक्लपक्षके ।
लिखितो ह्येष रामेण शारभेन्द्रानुशासनात् ॥

स्वस्ति शालिवाहनशके १७३४

Subject: Vāsudevamanana a treatise dealing with the doctrines of Advaita Vedānta.

Remarks:—The Ms. is in very good condition. Alternate sheets are sulphurated.

This Ms. was written by one Rāma at the bidding of Śarabhoji Rāja in the Year 1734 śaka which corresponds to A. D. 1812. It is a very popular work and is published in many places and is also translated into some of the vernaculars. The Śrī Vāṇi Vilās Press, Srirangam has brought out an edition with an English Introduction.

---

## ॥ लघुवासुदेवमननप्रकरणम् ॥

## 7571. LAGHUVĀSUDEVAMANANA-PRAKARAṆAM.

S. S. Collection No. 95 b.

Substance—Palm leaf. Size—$11\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—58 (Several leaves are missing). Lines—7-8 to a Page. Script—Grantha. No. of Granthas—600. Author—? Incomplete. Printed.

**Beginning:**

योऽवतीर्णं इहाचार्यरूपेण यतिनां मुदे ।
श्रीमन्नारायणं वन्दे तं हरिं करुणानिधिम् ॥

मननाख्यप्रकरणं वासुदेवयतीश्वरैः ।
रचितं विस्तरेणाद्य संग्रहेण प्रकाश्यते ॥

बालानामुपकाराय ममापि ज्ञानसिद्धये ।
तत्र श्रीबालगोपः कृष्णः सन्निहितो भवेत् ॥

इह खलु धर्मार्थकाम...........

End:

तथात्मनोऽपि अज्ञताकारणभूतधियोपाधिना सर्वज्ञ-
त्वं............।

Colophon: (Leaf No. 33)

इति सप्तमवर्णकं ।

Subject: Laghuvāsudevamanana 1-12 Varṇakas.

Remarks:—The Ms. is in good condition. The other work contained herein is Advaitadīpikā. This work is only an abridgment of the bigger work of the same name. This work is published by the Śrī Vāṇī Vilās Press, Srirangam.

---

## ॥ लघुवासुदेवमननम् ॥

## 7572. LAGHUVĀSUDEVAMANANAM.

P. A. Collection No. 82.

Substance—Paper. Size—9½ × 4½ inches. Sheets—73. Lines—8-9 to a Page. Script—Devanāgarī. No. of Granthas—1000. Author—? Complete. Printed.

Beginning, end, colophon and subject—Same as No. 7574.

Remarks:—The Ms. is in good condition.

---

## ॥ वाक्यप्रकरणम् ॥

## 7573. VĀKYAPRAKARAṆAM.

Burnell's Catalogue No. 9866. Page 95. Left column.

Substance—Palm leaf. Size—18 × 4¼ inches. Leaves—

101 (1-101). Lines—5 to a Page Script—Telugu. No. of Granthas—2000. Author—Avadhūtaśivayogīndra. Complete. Not Printed.

**Beginning:**

वचः पारावारप्रमथनमहिम्नः श्रुतिततेः
प्रसिद्धं यद्वस्तु प्रथितनवनीतोपममभूत् ।
तदद्वैताश्रान्तप्रतिपदवधूतप्रभुशिव-
स्वचिन्मायाशक्त्या जनयति जगन्निष्कृतिकरम् ॥

तत्त्वम्पदविवेकोक्तिमवधूतसदाशिवः ।
कुरुते बालबोधाय यथा वेदान्तपद्धति ॥

शास्त्रार्थनिश्चयः पूर्वैः कृतो यद्यपि सादरम् ।
तथापि बुद्धिसङ्कोचजिज्ञासापदलक्षितः ॥

अवधूतशिवेवाक्ययुक्तिरित्यनुमन्यते ।
नित्याय निर्विकल्पाय योगध्येयाय सर्वदा ॥

तत्त्वंपदार्थरूपाय शम्भवे गुरवे नमः ।

वेदान्तेषु बहुश्रुतिव्यवसितं गोप्यं स्थितं रोधसि
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निश्रेयकृत्यं मिदम्(?) ॥

**End:**

यस्योपदेशाद्विमृशादिभिक्षः
प्रपञ्चमिथ्यात्वमतिः प्रतीता ।

तं योगिवर्यं परमावधूतं
ज्ञात्वा कृपालुं तरसा भजे त्वम् ॥
मोक्षादिदत्तहस्तेन महावाक्यार्थवादिना ।
अवधूतशिवेनेमे वर्नयादशवर्नता(?) ॥

**Colophon:**

इति श्रीकैवल्यान्वयप्रवर्तकश्रीमत्परमहंसपरिव्राजकाचार्यवर्यपरशिवपादयुगलकमलिनीराजहंसावधूतशिवयोगिभिर्विरचितवाक्यप्रकरणं विंशिकं सम्पूर्णम् ॥

Subject: Vākyaprakaraṇa 1-20 Prakaraṇas with a Canarese explanation.

| Prakaraṇa | | Leaves |
|---|---|---|
| 1 | ? | 1—3 |
| 2 | कल्पितपुरुषोत्पत्तिः | 7 |
| 3 | ब्रह्माण्डोत्पत्तिः | 10 |
| 4 | पिण्डोत्पत्तिवाक्यविवेकः | 15 |
| 5 | अनुभवमतसङ्ग्रहोपदेशः | 23 |
| 6 | सूक्ष्मविवेकः | 29 |
| 7 | अवस्थात्रयनिराकरणम् | 32 |
| 8 | निवर्त्यनिवर्तकभावः | 35 |
| 9 | मोक्षलक्षणम् | 38 |
| 10 | अवधूतचरित्रम् | 43 |
| 11 | भेदवादखण्डम् | 49 |
| 12 | कर्मोपदेशः | 52 |
| 13 | सद्गुणोपदेशः | 62 |

Remarks:--The Ms. is in good condition. The other work contained herein is a Śaiva work in Canarase Language.

---

## ॥ वाक्यामृतम् ॥

## 7574. VĀKYĀMṚTAM.

Burnell's Catalogue No. 9885. Page 95. Right column. Substance—Palm leaf. Size—$16\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—10 (183-192). Lines—6 to a Page. Script—Telugu. No. of Granthas—200. Author—Viśveśvara. Incomplete. Not Printed.

Beginning:

वेदवाक्यप्रकरणं वाक्यामृतम् ॥

विश्वान्तर्बहिरात्मबोधमहितो विश्वेश्वरो भूतले

विख्यातश्रममावहन् स्थिरमतिः प्रज्ञाप्रभावोज्ज्वलः ।

विश्वाकारतयेव शान्तहृदयः शश्वद्गुरूपासना-

संसिद्धात्मरहस्यतत्ववचनं व्यक्तीकरोति स्फुटम् ॥

विद्वांसो भुवि सन्ति चेदिह जगद्विख्याततवाक्स्फूर्तिम-
द्वाक्यार्थप्रतिपादनैकमतयश्चेतेऽपि कान्ताश्च तत् ।
तैरेवादरणीयमेतदनघं वाक्यामृतं निर्मल-
ज्ञानाम्भोनिधिसंभवं श्रवणतः सर्वार्थदं साधनम् ॥

अथ पञ्चभूतोत्पत्तिं व्याख्यास्यामः ।
सद्योजाताचदा भूमिर्वामदेवाद्भवेज्जलम् ।
अघोरादग्निरुत्पन्नः पुरुषाद्वायुरुच्यते
ईशानाद्गगनाकारं पञ्चब्रह्ममयं जगत् ॥

**End:**

उक्तप्रकारेण शरीरेण कर्मकरणं कायिकं इति करणत्रयं
उदकाग्निमन्दाग्निशोकाग्निवडवाग्निकामाग्नि........ ।

Subject: Vākyāmṛtam.

**Remarks**:—The Ms. is in good condition. Dr. Burnell has given Vedāntopanyāsa as its name.

---

## ॥ वेदान्ततत्त्वसारः ॥

## 7575. VEDĀNTATATTVASĀRAḤ.

Burnell's Catalogue No. 9853. Page 93. Right column. Substance—Palm leaf. Size—18 × 1¼ inches. Leaves—151 (64-214). Lines—7 to a Page. Script—Grantha. No. of Granthas—3300. Author—Śrīvidyendrasarasvati. Incomplete. Wants beginning. Not printed.

**Beginning:**

....प्रसक्तिः सर्वत्र सुलभैव । न च प्रतियोगिमति तत्सं-
सर्गारोपस्य प्रमात्वनियमात् तज्जन्यतदाधिकरणकभा...

न्याया एव तदधिकरणकाभावबुद्धेः प्रमात्वनियमादिति वाच्यं भ्रमरूपसंसर्गारोपजन्यत्वापेक्षया स्वसत्ताकालीन-सत्ताकविषय............ ।

End:

योऽपि नित्यसुखाभिव्यक्तिर्मुक्तिरिति प्रतिजानते ते-षामपि तत्रैव तात्पर्यम् । स्वयं भासमानानीत्यानन्दात्माति-रिक्तनित्यसुखाभिव्यक्तेः निष्प्रमाणकत्वात् । सत्यं विज्ञा-नमानन्दं ब्रह्मेति शास्त्रमपभेद एव मानम् । यत्तु अभिव्य-क्तिः साक्षात्कारः मुक्तव्यवहितसामग्रीजन्योऽपि न साम-ग्र्यभावान्नित्य एवेति कल्पनं तत्कल्पनमेव मानाभावात् । लाघवसहकृतश्रुतिवृन्दस्याद्वैत एव तात्पर्यमिति असकृदा वेदितम् । ❋ ❋

अन्यच्चास्मद्गुरुचरणैः श्रीमद्वेदान्तभूषणे न्यरूपीति नेह निरूप्यते । प्रपञ्चस्तु त[न्त्र]त्रैवानुसन्धेय इति ।

प्रीयतां तत्त्वसारेण मयानेन वृषध्वजः ।
अव्यक्तवचसा तातो यथा संप्रीयते शिशोः ॥

द्वैतध्वान्तविधूननक्षमरविज्ञानेन्द्रदिव्याख्यया
कैवल्येन्द्रसरस्वतीति सुपदप्रख्याततनाम्ना च यः ।
ख्यातः श्रीवटमूलगेहरमणः भूमौ भवानीपतिः
तस्यायं कृपया लवोऽपि विदुषां स्यात्तत्त्वसारो मुदे ॥

सद्दोषैर्वैषा कृतिरिति विवादो न हि बुधा
तथापि ब्रह्मादिप्रणतचरणाभ्यां पुरारिपोः ।

सुसंस्कृता दृष्टा भवति विबुधानामपि मुदे
मुधा किं धुर्तूर........................... ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकैवल्येन्द्रज्ञानेन्द्रसरस्वतीपूज्यपादशिष्य श्रीविश्वेन्द्रसरस्वतीमुनिविरचिते वेदान्ततत्त्वसारे चतुर्थः परिच्छेदः ॥

Subject: Vedāntatattvasāra 1-4 Paricchedas.

Remarks — The Ms. is in a fairly good condition.

The author calls himself the desciple of Kaivalyendra and says that his Guru was the author of a Vedāntic work called Vedāntabhūṣaṇa.

---

॥ वेदान्तसारः ॥

## 7576. VEDĀNTASĀRAḤ.

Burnell's Catalogue No. 9829 b. Page 90. Right column. Substance—Palm leaf. Size—$11\frac{1}{2} \times 1\frac{1}{2}$ inches Leaves—1-33. Lines—6 to a Page. Script—Grantha. No. of Granthas—368. Author—Sadānanda. Complete. Printed.

**Beginning:**

अखण्डसच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥
अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः ।
गुरूनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥
वेदान्तो नाम उपनिषत्प्रमाणम् । तदुपकारीणि शारी-

रकसूत्रादीनि च । अस्य वेदान्तप्रकरणत्वात् तदीयैरे-
वानुबन्धैस्तद्वत्तासिद्धेर्न ते पृथगालोचनीयाः । तत्रानु-
बन्धो नामाधिकारिविषयसंबन्धप्रयोजनानि ।

End:

"न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते"
"विमुक्तश्च विमुच्यते" इत्येवमादिश्रुतेश्च ।

**Colophon:**

वेदान्तसारः समाप्तः ॥

Subject: Vedāntasāra in the opinion of the author the essence of Vedānta philosophy.

Remarks:—The Ms. is in a fairly good condition. The other works contained herein are:—

| | | | |
|---|---|---|---|
| 1 | महावाक्यविवेकव्याख्या | 5 | भवरोगाष्टकम् |
| 2 | वेदान्तसारः | 6 | नृसिंहाश्रमिप्रशंसा |
| 3 | मन्त्राष्टाङ्गयोगः | 7 | यत्याचारसङ्ग्रहः |
| 4 | मन्त्रदशाङ्गयोगः | 8 | एकश्लोकव्याख्या |

The Vedāntasāra has been edited by Col. Jacob from Bombay, with the commentaries of Nṛsimhasarasvati and Rāmatīrtha.

It is also published by the Śrī Vāṇī Vilās Press, Srirangam with the commentary of Āpadeva and a critical Introduction by Prof. K. Sundararaman M. A.

This is a very popular work and is translated into German (P. Deussen), into English and into many Indian vernaculars. One of the Ms. gives the name of the author as Śuddhānanda from which it may be guessed that he was known by that name also.

## VEDĀNTASĀRAH.



| Descriptive No. | Collection No. | | Substance | Size inches. | No. of Sheets or leaves. | No. of Lines per Page or sheet. | Script. | Complete or otherwise. |
|---|---|---|---|---|---|---|---|---|
| 7577 | B. L. | 6363 | Paper. | $7\frac{1}{4}\times4\frac{3}{8}$ | 25 | 9 | Devanāgarī. | Complete. |
| 7578 | ,, | 6422 | ,, | $11\times4\frac{3}{4}$ | 9 | 12 | ,, | ,, |
| 7579 | ,, | 6423 | ,, | $8\frac{1}{4}\times4\frac{1}{4}$ | 18 | 10 | ,, | ,, |
| 7580 | ,, | 9675 br | Plam lea: | $18\frac{1}{4}\times1\frac{1}{2}$ | 7 (11-17) | 8 | Telugu. | ,, |
| 7581 | ,, | 9676 | ,, | $16\frac{3}{4}\times1\frac{1}{2}$ | 13 | 7 | ,, | ,, |
| 7582 | ,, | 9677 e | ,, | $9\times1\frac{1}{2}$ | 19 | 7 | ,, | ,, |
| 7583 | ,, | 9677 h | ,, | $9\times1\frac{1}{2}$ | 18 (76-93) | 7 | ,, | ,, |
| 7584 | ,, | 9800 | ,, | $16\frac{1}{2}\times1\frac{1}{2}$ | 9 (1-9) | 8 | ,, | ,, |
| 7585 | N. S. | 2 | Paper. | $9\times11\frac{1}{2}$ | 20 | 11 | Grantha. | ,, |

VEDĀNTASĀRAH (Contd.)

| Descriptive No. | Collection No. | | Substance | Size inches. | No. of Sheets or leaves. | No. of Lines per Page or sheet. | Script. | Complete or otherwise. |
|---|---|---|---|---|---|---|---|---|
| 7586 | P. A. | 109 | Paper | 10×4½ | 13 (1-13) | 10 | Devanāgarī. | Complete. |
| 7587 | J. L. | 931 | " | 9½×4½ | 26 (3-28) | 9 | " | Incomplete. |

# DETAILED REMARKS

on the

# VEDĀNTASĀRA MSS.

# IN THE ABOVE TABLE.

7577 Colophon:

इति श्रीमत्परमहंसपरिव्राजकाचार्य अद्वयानन्दपूज्यपादशिष्यशुद्धानन्द-
कृतौ वेदान्तसारः समाप्तः ।

7578 On the title page is given—

' तुळजामहाराजस्य पुस्तकम् '

7579 After the colophon are given the following loose verses—

भूतैश्च पंचभिः प्राणैः चतुर्दशभिरिन्द्रियैः ।
चतुर्विंशति तत्वानि सांख्यशास्त्रविदो विदुः ॥ १ ॥

महान्कालः प्रधानं च माया विद्ये च....सष: ।
इति पौराणिकाः प्राहुः त्रिंशत्तत्त्वानि तैः सह ॥ २ ॥

बिन्दुनादौ शक्तिशिवौ शान्तातीतौ ततःपरम् ।
षड्विंशत्तत्वमित्याहुः शैवागमाविशारदाः ॥ ३ ॥

पञ्च बुद्धीन्द्रियाणीह पंच कर्मेन्द्रियाण्यपि ।
पंच भूतविशेषाश्च मनश्चैव तु षोडश ॥

तन्मात्राण्यपि पंचैव मनोऽहंकार एव च ।
अष्टमं चाप्यथाऽव्यक्तमेताः प्रकृतिसंज्ञिताः ॥

एताः प्रकृतयश्चाष्टौ विकाराश्चापि षोडश ।
एवमेतदिहस्थेन विज्ञेयं तत्त्वबुद्धिना ॥

7580 The other works contained herein are:—**1.** Commentary on the 10th skandha of Bhāgavata. 2. **Aṣṭaślokī.**

**7581** At the beginning of the Ms. is given:—

"आश्विने शुक्लपक्षे तु त्रयोदश्यां बुधेऽहनि ।
वेदान्तसारस्यारंभः कृतः क्रोधनवत्सरे ॥"

and at the end is given:—

'आश्विने कृष्णपक्षस्य द्वितीया भानुवासरे ।
वेदान्तसारो लिखितो वेङ्कटेश्वरसूरिणा ॥'

7582 For the other works contained herein see remarks under No 1189.

**7583** The following additional verses are found at the beginning.

॥ श्रीपार्वती ॥

श्रुतस्सन्यक्त्वया देव शिवदीक्षाविधेः क्रमः ।
सर्ववेदान्तसारं मे सङ्ग्रहेण वदाधुना ॥

वेदान्तकृद्वेदवेद्यः त्वमेवान्यो न कश्चन ।
अद्वितीयोस्यनन्तोसि गुणवानसि निर्गुणः ॥

तस्माद्वेदान्तसर्वस्वं वद मे वदतां वर ।

॥ श्रीशिवः ॥

शृणु पार्वति वक्ष्यामि गुह्यमत्यन्तपावनम् ॥

वेदान्तसारसिद्धान्तरहस्यं मुक्तिसाधनम् ।
मार्गशीर्षे शुक्लपक्षत्रयोदश्यां रवेर्दिने ॥

काण्डद्वयातीतयोगिवर्येण युववत्सरे ।

लिखितं पुस्तकमिदं वेदवेदान्तवेदिना ॥

समाधिस्सर्ववेदानां राजोपनिषदुच्यते ।
यथा तद्बोध्यते ब्रह्म सामराज उदाहृतः ॥

अः पश्च ॥ विद्यापीठं + सेवते ॥

एवं ग्रन्थकर्ता स्वगुरुनमस्कारं कृत्वा वेदान्तसारं विलिखितुमारभते ॥

Colophon:

इति श्रीकाण्डद्वयातीतयोगिविरचिते मोक्षसाम्राज्यलक्ष्मीतन्त्रे सच्चिदानन्दलहरीपरिणये वेदान्तसारप्रवाहः ॥

Kāṇḍadvayātītayogin while culling out various Vedantic works for a compilation of a big work which he calls Mokṣasāmrājyalakṣmītantra has included Vedāntasāra in it to which he appends an introduction in the shape of a conversation between Śiva and Pārvatī.

7585 Colophon:

संग्रहवेदान्तं समाप्तम् ॥

वेदान्तसारसङ्ग्रहः ।

7586 Colophon:

The other work contained herein is Vedāntasāravarttikarājasaṅgraha.

7587 After the colophon is given—

जायते । अस्ति । वर्धते । विपरिणमते । अपक्षीयते । नश्यति ॥

स्नातं तेन समस्ततीर्थसलिले दत्तं महीमण्डलम्

विप्रेभ्यः पितृदेवताऋषिगणास्सर्वेपि सन्तर्पिताः ।

जप्ता मन्त्रसहस्रकोटिरमुना तप्तश्च तीव्रं तपः
यस्य ब्रह्मविचारणक्षणमपि प्राप्नोति स्थैर्यं मनः ॥

---

## ॥ वेदान्तसारटीका– सुबोधिनी ॥

## 7588. VEDĀNTASĀRAṬĪKĀ—SUBODHINĪ.

Burnell's Catalogue No. 6807. Page 90. Right column. Substance—Paper. Size—$11\frac{1}{2} \times 5\frac{1}{2}$ inches. Sheets—13. Lines—16-17 to a Page. Script—Devanāgarī. No. of Granthas—600. Author—Kṛṣṇānandaśiṣya. Incomplete. Not printed.

Beginning:

कृष्णानन्दगुरुं नत्वा परमानन्दमद्वयम् ।
वक्ष्ये वेदान्तसारस्य टीकां नाम्ना सुबोधिनीम् ॥

इह खलु कश्चिन्महापुरुषो नित्याध्ययनविध्यधीतसकलवेदराशीनां चिन्मात्राश्रयतद्रूपाद्वयानन्दविषयानाद्यनिर्वचनीयभावरूपाज्ञानविलसितानन्तभावानुष्ठितकाम्यनिषिद्धवर्जितनित्यनैमित्तिकप्रायश्चित्तोपासनकर्मभिः सम्यक्प्रसन्नेश्वराणां इष्टकाचूर्णादिसंघर्षितादर्शतलवदातिनिर्मलाशयानां नलिनीदळगतजललववद्धिरण्यगर्भादिस्तम्बपर्यन्तं जीवजातं स्वात्मवन्मृत्योरास्यान्तर्गतं क्षणभङ्गुरं तापत्रयाग्निसन्दह्यमानं ह्यनिशमात्मन्यनुपश्यतामातिविवेकिनां अत एव

* *

मंगलस्यावश्यकर्तव्यतां प्रदर्शयन् लक्षणयानुबन्ध-

चतुष्टयं च निरूपयन् परमात्मानं नमस्कुरुते । अखण्ड-मित्यादिना ।

अखण्डसच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥ १ ॥

व्या । अभीष्टस्य निश्रेयसस्य सिद्धये प्राप्त्यर्थं आत्मा-नमाश्रये ॥

End:

अधुना जाग्रदवस्थायां विश्ववैश्वानरयोः तत्तद्देवताधि-ष्ठितश्रोत्रादिभिः चतुर्दशभिः करणैः शब्दादिग्रहणप्रकारं दर्शयति । तदानीमेतौ विश्ववैश्वानरौ दिग्वातार्कवरुणा-दिभिः क्रमान्नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमा-च्छब्दस्पर्शरूपरसगन्धान् अग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमा.................. ।

Subject: Vedāntasāraṭīkā known as Subodhinī a commentary on Sadānandā's Vedāntasāra by an unknown author.

Remarks:—The Ms. is in a fairly good condition. The author calls himself the desciple of Kṛṣṇānanda, the author of Siddhāntasiddhāñjana. On the title page is given the following:—

हे पुस्तक श्रीमन्तराजेश्री शरभोजीमहाराजसाहेबयांचा कारकर्तीत काशीहून खरीदीकरून अणिलें असे ।

---

## ॥ वेदान्तसारः ॥

## 7589. VEDĀNTASĀRAH.

Burnell's Catalogue No. 6420. Page 92. Right column.

Substance—Paper. Size—8×8¼ inches. Sheets—22. Lines—8 to a Page. Script—Devanāgarī. No. of Granthas—350. Author—Dattātreya. Complete. Not printed.

Beginning:

श्रीगणेशाय नमः ॥

येनेदं पूरितं सर्वं आत्मनेनात्मनाऽत्मनि(?) ।
नराकारकथं वन्दे(?)मभिन्नं शिवमव्ययम् ॥ १ ॥

पञ्चभूतात्मकं विश्वं मरीचिजलसन्निभम् ।
कस्यास्तीह नमस्कार अहमेको निरन्तरम् ॥ २ ॥

वेदान्तसारसर्वेशं ज्ञानविज्ञानमेव च ।
अहमात्मा निराकारः सर्वव्यापी स्वभावतः ॥ ३ ॥

आत्मैव केवलं सर्वं भेदाभेदो न विद्यते ।
अस्ति नास्ति कथं ब्रूयाद्विस्मयः प्रतिभाति मे ॥ ४ ॥

End:

मद्यपानेषु यः पापं नारीसंगे तथैव च ।
तस्मात् द्वुभया(?)त्याज्यं निन्दन्ति नरके बहु ॥ १९ ॥

व्यामोहयति पुंसानां नारी बुध्योत्यजे(?)ध्रुवम् ।
आश्चर्यं कुरुते चित्रं नार्योयं त्यजतेयदि ॥ २० ॥

चित्ते चित्तं धातुबद्धं शरीरं
नष्टे चित्ते धावतो यान्ति नाशम् ।
तस्माच्चित्तं यत्नतो रक्षणीयं
स्वस्थे चित्ते बुद्धयः संभवन्ति ॥

**Colophon:**

इति श्रीवेदान्तसारेषूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीदत्तात्रेयस्वामि-
कार्तिकेयसंवादे स्वात्मसंवित्युपदेशो नाम सप्तमोऽध्यायः ॥

Subject: Vedāntasāra written like a conversation between Dattātreya and Kārtikeya. 1-7 Prakaraṇas.

The first Prakaraṇa deals with Advaitavarṇanā and the other six with Svātmasaṃvittyupadeśa.

Remarks:—The Ms. is in a fairly good condition. There is a transcript copy of this work in this library vide T. V. No. 322. The text of this Ms. is similar to that of Avadhutgītā.

---

॥ वेदान्तसारः ॥

## 7590. VEDĀNTASĀRAḤ.

Burnell's Catalogue No. 12046 g.

**Substance**—Palm leaf. Size—15⅜ × 1⅝ **inches**. Leaves—5 (11-15). Lines—6 to a Page. Script—Telugu. No. of Granthas—110. Author—Dattātreya. Incomplete. Not printed.

Beginning:

....नामृतं चारु पिबन्ति धीराः
स्वरूपनिर्वाणमनामयोऽहम् ॥ २६ ॥

विन्दति छिन्दति नहि नहि मन्त्रं
नहि नहि छन्दोलक्षणतन्त्रम् ।
समरसमग्नो भावितपूतः
प्रलपितचेतः कथमवधूतः ॥ २७ ॥

End:

इन्द्रजालमिदं सर्वं यथा मरुमरीचिका ।
अखण्डितमनाकारो वर्तते केवलश्शिवः ॥ १४ ॥

धर्मादौ मोक्षपर्यन्तं निरहस्सर्वदा वयम् ।
कथं रागविरागश्च कल्पयन्ति विपश्चितः ॥ १५ ॥

**Colophon:**

इति श्रीदत्तात्रेयभगवत्कृते वेदान्तशास्त्रे शास्त्रसंवित्युपदेशे निरञ्जनं नाम सप्तमः(?) संक्षेपः ॥

Subject: Vedantasārah 4-6 Prakaraṇas.

**Remarks.**—The Ms. is in a decaying condition. The other works contained herein are mantras. This Ms. abruptly begins towards the close of the fourth Prakaraṇa. This Ms. represents a portion of the work noticed under No. 7589.

---

## ॥ वेदान्तसारः ॥

## 7591. VEDĀNTASĀRAḤ.

Burnell's Catalogue No. 12046 h.

**Substance**—Palm leaf. Size—$15\frac{3}{8} \times 1\frac{3}{8}$ inches. **Leaves**—4. Lines—6 to a Page. Script—Telugu. No. of Granthas—90. Author—Dattātreya. Incomplete. Not Printed.

**Beginning:**

॥ १५ ॥ दिवा नक्तंगते चित्तमुद्यास्तमयो न हि ।

विदेहस्य शरीरत्वं कल्पयन्ति कथं बुधाः ॥ १६ ॥

नाविभक्तं विभक्तञ्च न हि दुःखसुखानि च ।
न हि सर्वमसर्वञ्च विद्धि चात्मानमव्ययम् ॥ १७ ॥

नाहं कर्ता न भोक्ता च नहि कर्म पुरातनम् ।
न मे देहो विदेहो वा निर्ममेति ममेति किम् ॥ १८ ॥

End:

अस्तं गतो नैव सदोदितोऽहं
तमश्च ज्ञानं च तु मे विभूती ।
सन्ध्यादिकं कर्म कथं वदामि
स्वरूपनिर्वा० ॥ २४ ॥

असंशयं विद्धि निराकुलं माम्
असंशयं विद्धि निरन्तरं माम् ।
असंशयं विद्धि निरञ्जनं मां
स्वरूप० ॥ २५ ॥

धनानि साराणि परित्यजन्ति.... ॥

Colophon: (5th leaf)

इत्यवधूतग्रन्थे दत्तात्रेयगोरक्षसंवादे आत्मसंवित्युपदेशे प्रथमप्रकरणम् ।

Subject: Avadhūtagrantha 1-8 Prakaraṇas.

Remarks:—The Ms. is in a decaying condition. The other works contained herein are mantras. This Ms. abruptly begins in the middle of the 1st Prakaraṇa and ends towards the close of the 3rd Prakaraṇa. This is a portion of the text of No. 7589.

॥ वेदान्तनामरत्नसहस्रव्याख्या ॥

## 7592. VEDĀNTANĀMARATNA-SAHASRAVYĀKHYĀ.

Burnell's Catalogue No. 6328 a. Page 92. Left column. Substance—Paper. Size—$11\frac{1}{4} \times 4$ inches. Sheets—168. Lines—9 to a Page. Script—Devanāgarī. No. of Granthas—5200. Author—Paramaśivendrasarasvatī. Incomplete. Not Printed.

Beginning:

नमामि दन्तिनं स्कन्दं सदाशिवमुमापतिम् ।
उमाञ्च हिमवत्पुत्रीं ब्रह्मविद्यास्वरूपिणीम् ॥
अक्षमालापुस्तकश्रीवरदाभयलाञ्छितम् ।
कल्याणरूपं कलये हृदये सुस्थितं महः ॥
शंखचक्रधरं श्यामं शरच्चन्द्रसुशीतलम् ।
भक्तेष्टदं पदं नौमि सुरसिद्धनिषेवितम् ॥
येषां कटाक्षलेशेन तीर्णः संसारसागरः ।
तेषां गुरूणां पादारविन्दद्वन्द्वं भजाम्यहम् ॥
अनुभूय स्वमात्मानं अनुसन्धानमादरात् ।
वेदान्तनामरत्नानां सहस्रेण करोम्यहम् ॥

इह खलु कश्चिदस्मिन् जन्मनि जन्मान्तरेऽपि वा श्रुत्यादिविहितनित्यानुष्ठानेन परमेश्वराराधनरूपेण शुद्धा-

न्तःकरणः श्रुत्यादिभिः प्रत्यक्षादिभिश्च प्रमाणैः, *

* *

प्राणिनिकायं आत्मानं चावलोक्यातिचकितमानसः सुखदुःखबहुलसंसारसागरादात्मनस्तरणोपायमन्वेषते ।

* *

(Sheet No. 4)

'आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते'
इत्याद्या स्मृतिरपि निरन्तरमात्मानुसन्धानवतः कार्यान्तरं वारयति ॥

अतस्तदर्थतया नाम्नां सहस्रं ईशावास्याद्यासु तापनीयान्तासु श्रुतिषु बुद्धिसौकर्याय अकारादि क्षकारान्ततया संग्रहीतं ।

तत्रादौ ईशावास्योपनिषदि । अनेजत् ।

End:

महासत्, महाचित् । अपरिच्छिन्नचिद्रूपः । महानन्दः, अपरिच्छिन्नानन्दः । महाप्रभुः, स्वसंनिधिसत्तामात्रेण सर्वप्रवर्त्तकस्वरूपः । महस्वान् मानत्वादित्यादित्यादिश्रुतिः । मन आद्यावित्ता । मन आदिरक्षकः । मन आदिसाक्षी । स्पष्टं । मन आद्यवितारं मन आदिसाक्षिणमन्विच्छेदिति । श्रुतिः ।

Colophon:

इति श्रीमत्परमहंसपरिव्राजकाचार्यअभिनवनारायणेन्द्रसरस्व-
तीपूज्यपादशिष्यश्रीपरमशिवेन्द्रसरस्वतीविरचिते वेदान्त-
नामरत्नसहस्रव्याख्याने स्वरूपानुसंधानाख्ये द्वितीयः
खण्डः ॥

Subject: Vedāntanāmaratnasahasravyākhyā, called Svarūpānusandhāna; Khaṇḍas 1 and 2.

Remarks:—The Ms. is in good condition. Alternate sheets are sulphurated.

The author of this work is Abhinava Nārāyanendrasarasvati's pupil, ParamaŚivendrasarasvatī, by name.

The work is an elaborate and immensely informing commentary on a thousand names of the Brahman, occurring in the Upaniṣads. The work, in a brief introduction points out the importance of Ātmānusandhāna—meditation—to help which it proposes to explain the innumerable Upaniṣadic words connoting the Brahman. The collection of such names is the author's own work. They are commented in alphabetical order. The first Khaṇḍa ends (p. 114) with names beginning with vowels and other 2 Khaṇḍas comment on names beginning with consonants.

The profuse purāṇic and other Anuṣṭub quotations in the body of the work have induced Dr. Burnell to remark that this prose work is "chiefly in Ślokas'.

This author may be the Guru of the famous Sadāśiva-Brahman.

## ॥ वेदान्तनामरत्नसहस्रव्याख्या ॥

## 7593. VEDĀNTANĀMARATNASAHASRA-VYĀKHYĀ.

Burnell's Catalogue No. 6328 b. Page 92. Left column. Substance—Paper. Size—11 × 4 inches. Sheets—68. Lines—9 to a Page. Script—Devanāgarī. No. of Granthas —2000. Author—Paramaśivendrasarasvatī. Inomplete. Not printed.

Beginning:

शिवाय गुरवे नमः ।

न भाषन्ते तत्त्वं परमुपदिशन्तोऽपि च पितृ-
ष्वसुः पुत्रं दारान् नृपतिमपि शिष्यान् विदधते ।
तदस्मै सर्वस्मै स्फुटमुपदि(श)न्नेष वदनं
द्वयानामेतेषां नमयति हि नारायणयतिः ॥

केनोपनिषदि ॥ यक्षं, पूज्यं । परमेश्वरस्य सर्वपूज्य-
त्वं प्रश्नोत्तराभ्यां सूतसंहितायां प्रपञ्चितं । नैमिशीया
ऊचुः ॥

End:

प्रकृतश्रुतिस्तु । क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिंग
इति ।

सखे हा किं कुर्मः किमिति कथयामः कथममुं
तरामः संसारं क नु च विभवामो वयममी ।

इतीदृक् चित्ताब्धौ हृदय विनिमज्यालमनिशं
गुरुं शोकध्वान्ते तरणिमवलम्बस्व तरणिम् ॥

**Colophon:**

इति श्रीमत्....स्वरूपानुसन्धानाख्ये [द्]तृतीयः खण्डः ।

Subject: Vedāntanāmaratnasahasravyākhyā called also as Ātmānusandhāna; III Khaṇḍa.

**Remarks:**—The Ms. is in good condition.

---

## ॥ वेदान्तनामरत्नसहस्रव्याख्या—

## 7594. VEDĀNTANĀMARATNASAHASRA-VYĀKHYĀ.

**Burnell's Catalogue** No. 11406 b.

Substance—Palm leaf. Size—18½ × 2¾ inches. Leaves—42 (31-72). Lines—9-10 to a Page. Script—Telugu. No. of Granthas—2500. Author—Paramaśivendrasarsvatī. Incomplete. Not printed.

Beginning—Same as No. 7592.

End:

'आर्तिपारिगृहीतं स्वप्नमायामरीच्युदकसममसारं आत्मै-
वैकः केवलो नित्यमुक्त' इति । एवं षष्ठाध्यायेऽपि ।

(Corresponding to text on p. 101, in 7592)

Subject: Same as 7592; Khaṇḍa 1; incomplete.

**Remarks:**—The Ms. is in good condition. Though the number-

ing of pages is continuous, there is a lacuna between ll. 45 and 46. (The matter contained between sheets 80-62 in 7592 here missing in the above gap).

At the end of the Ms. seven leaves give us the 1000 names commented in this work together, in the form of an **Arcanā-Nāmāvali.**

The other work contained herein is Jñānasārāvalī a Saivāgama work.

---

## ॥ वेदान्तपरिभाषा ॥

## 7595. VEDĀNTAPARIBHĀṢĀ.

**Burnell's** Catalogue No. 9681. Page 90. Left column. **Substance**— Palm leaf. Size—$15\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—32. Lines—6-9 to a Page. Script—Grantha. No. of Granthas—800. Author—Dharmarājādhvarin. Complete. Printed.

**Beginning:**

यदविद्याविलासेन भूतभौतिकसृष्टयः ।
तन्नौमि परमात्मानं सच्चिदानन्दविग्रहम् ॥

* *

इह खलु धर्मार्थकाममोक्षेषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमः पुरुषार्थः ।

**End:**

तदेवं ब्रह्मज्ञानान्मोक्षः, मोक्षश्चानर्थनिवृत्तिः अतिशय-ब्रह्मानन्दावाप्तिश्चेति सिद्धं प्रयोजनम् ।

**Colophon:**

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां वेदान्तपरिभाषायामष्टमः परिच्छेदः ॥

Subject: Vedāntaparibhāṣā, an introduction to the advaita philosophy in 8 Paricchedas.

**Remarks**:—The Ms. is in a decaying condition.

Dharmarājādhvarin, the author of the Vedānta Paribhāṣa, is identical with the author of the Tarkacūḍāmaṇi (No. 6217) etc., described in the Nyāya Volume. He flourished in a village Kaṇḍaramāṇikkam in Tanjore District in the 17th century. He was the pupil of the famous Nṛsimhāśrama and Venkatanātha of Velangudi also a village in Tanjore District. His other Vedāntic work is Padayojanā, a commentary on the Catussūtrī portion of the Pañcapādikā.

The work has been published with Vedāntaśikhāmaṇi, a commentary by his own son Rāmakṛṣṇadīkṣita, by Venkateśvara Press, Bombay, as No. 93 in the Trivandrum Sanskṛt Series and by the Calcutta University with the commentary of Mahāmahopādhyāya Anantakṛṣṇa Śastri.

---

॥ वेदान्तपरिभाषा ॥

## 7596. VEDĀNTAPARIBHĀṢĀ.

**Burnell's Catalogue No.** 9682. Page 90. Left column. **Substance**—Palm leaf. **Size**—14 × 1¼ inches. **Leaves**—85. **Lines**—8-9 to a Page. **Script**—Grantha. **No. of Granthas**—800. **Author**—Dharmarājādhvarin. **Complete. Printed.**

Beginning, end, colophon and subject—Same as No. 7595.

Remarks :—The Ms. is in a decaying condition.

---

## ॥ वेदान्तपरिभाषा ॥

## 7597. VEDĀNTAPARIBHĀṢĀ.

Burnell's Catalogue No. 9680. Page 90. Left column. Substance—Palm leaf. Size—15¾ × 1¼ inches. Leaves—36. Lines—6 to a Page. Script—Telugu. No. of Granthas—800. Author—Dharmarājādhvarin. Complete. Printed.

Beginning, end, colophon and subject—Same as No. 7595.

Remarks:—The Ms. is in a fairly good condition.

At the beginning there is one leaf containing the Gaṅgāṣṭakā attributed to Śrī Śaṅkara.

---

## ॥ वेदान्तपरिभाषा ॥

## 7598. VEDĀNTAPARIBHĀṢĀ.

S. K. Collection No. 117.

Substance—Paper. Size—12 × 4¾ inches. Sheets—44. Lines—8 or 9 to a Page. Script—Devanāgarī. No. of Granthas—800. Author—Dharmarājādhvarin. Complete. Printed.

Beginning, end and subject—Same as No. 7595.

Colophon:

इति श्री + प्रयोजननिरूपणपरिच्छेदः समाप्तः ॥

चैत्रमास्यसिते पक्षे द्वादश्यां स्थिरवासरे ।

समाप्तिञ्चागमद्ग्रन्थो बहुधान्याह्वयवत्सरे ॥

**Remarks** :—The Ms. is in good condition.

---

## ॥ वेदान्तपरिभाषा ॥

## 7599. VEDĀNTAPARIBHĀṢĀ.

N. S. Collection No. 5.

Substance—Paper. Size—10×4 inches. Sheets—28. Lines—11 to a Page. Script—Devanāgarī. No. of Granthas—800. Author—Dharmarājādhvarin. Complete. Printed.

Beginning, end and subject—Same as No. 7595.

**Colophon:**

इति श्री + वेदान्तपरिभाषायामष्टम: परिच्छेदः ॥ समाप्तश्चायं ग्रन्थः । संवत् १७७२ आश्विनशुद्ध ७ । तद्दिने लिखितमिदं पुस्तकं स्वार्थं परार्थं च ॥

Remarks:—The Ms. is in a fairly good condition,

---

## ॥ वेदान्तपरिभाषाव्याख्या—शिखामणिः ॥

## 7600. VEDĀNTAPARIBHĀṢĀVYĀKHYĀ—ŚIKHĀMAṆIḤ.

Burnell's Catalogue No. 6266. Page 90, Left column.

Substance—Paper. Size—11¾×5½ inches. Sheets—82.

Lines—15 to a page. Script—Devanāgarī. No. of Granthas—3600. Author—Rāmakṛṣṇādhvarin. Complete. Printed.

**Beginning:**

श्रीगणेशाय नमः ॥

वागीशाद्याः + गजाननम् ॥ १ ॥

नैदाघवारिकिरणेष्विव वारिपूरः
सर्वो विभाति यदबोधवशात्प्रपञ्चः ।
मायाफणीव च निमीलति यत्प्रबोधात्
तद्ब्रह्म नौमि सुखमद्वयमात्मरूपम् ॥ २ ॥

आसेतोरासुमेरोरपि भुवि विदितान्धर्मराजाध्वरीन्द्रा-
न्वन्देऽहं तर्कचूडामणिमणिजननक्षीरधींस्तातपादान् ।
यत्कारुण्यान्मयाऽभूदधिगतमधिकं दुर्ग्रहं सूक्ष्मधीकै-
रप्यान्तं शास्त्रजातं जगति मखकृता रामकृष्णाह्वयेन ॥ ३ ॥

वेदान्तपरिभाषाख्यां सोऽहं तातविनिर्मिताम् ।
व्याकरोमि कृतिं सर्वश्रुत्यन्तार्थप्रकाशिकाम् ॥ ४ ॥

मत्कर्तृकप्रबन्धं च न प्रशंसन्तु पण्डिताः ।
तथापि बुद्धिवैशद्यफलोऽयं मत्परिश्रमः ॥ ५ ॥

प्रेक्षावत्प्रवृत्त्यर्थं विषयप्रयोजने निर्दिशन् निर्विघ्नपरिसमाप्तये मङ्गलमाचरितं शिष्यशिक्षायै ग्रन्थतो निबध्नाति ॥

## VEDĀNTAPARIBHĀṢĀVYĀKHYĀ—ŚIKHĀMAṆIḤ.

| Descriptive No. | Collection No. | Substance. | Size inches. | No. of Sheets or leaves. | No. of Lines per Page or sheet. | Script | Complete or otherwise. |
|---|---|---|---|---|---|---|---|
| 7601 | B. L. 6503 | Paper. | $14\frac{1}{2}\times8$ | 226 (89+19+7+111) | 9-10 | Devanāgarī. | Complete. |
| 7602 | „ 9771 | Palm leaf. | $11\times1\frac{1}{2}$ | 148 | 6 | Telugu. | Complete. |
| 7603 | T. S. 169 | Paper. | $9\frac{1}{2}\times4$ | 109 (6-114) | 10 | Devanāgarī. | Incomplete; 1-7 Paricchedas; |
| 7604 | B. L. 9772 | Palm leaf. | $18\frac{1}{4}\times1$ | 208 (2-304) | 5-6 | Grantha. | „ Wants beginning & end. |
| 7605 | „ 9778 | „ | $15\frac{1}{2}\times1\frac{1}{4}$ | 115 | „ | „ | „ 1-2 Paricchedas. |

DETAILED REMARKS

on the

VEDĀNTAPARIBHĀṢĀVYĀKHYĀ MSS.

IN THE ABOVE TABLE.

7604 After the colophon is given:—

ஸ்ரீவைஷ்ணவ பெரியபெருமாள் அப்பன் எழுத்து.

---

## ॥ स्वात्मानन्दचन्द्रिका ॥

## 7606. SVĀTMĀNANDACANDRIKĀ.

T. S. Collection No. 876.

Substance—Paper. Size—6¼ × 8¼ inches. Sheets—17. Lines—5 to 8 to a Page. Script—Devanāgarī. No. of Granthas—700. Author—Svānandayogī. Complete. Not printed.

Beginning:

श्रीदाक्षिणास्याय नमः ॥

श्रीगुरुकृपैव नौका
संसारापारसागरं तरितुम् ।
इति लोककिंवदन्ती
सत्यैवासीन्ममापि भाग्यवशात् ॥ १ ॥

भावुकपिकमाकन्दं
चित्सुखकन्दं प्रणम्रमुनिबृन्दम् ।
गुरुवरमात्मानन्दं
स्वच्छन्दं नौमि सच्चिदानन्दम् ॥ २ ॥

चिणूचिणूचिणिचिणिवीणा-
 शङ्खमृदङ्गोचकाहलध्वानितः ।
घण्टावेणुसुमेरी
 स्वानितध्वानितः परं गुरुं नौमि ॥ ३ ॥

बहवाश्शिष्टा दुष्टाः
 नानाचेष्टास्तथा व्रताक्लिष्टाः ।
अन्तर्निष्ठुस्तेषां
 आत्मानन्द इव कोपि नालोकि ॥

End:

यावद्व्यक्तव्यांशः
 तावान्मिथ्यैव संशयो नात्र ।
तस्मादनुभवरासिको
 मौनादन्यद्वरं न जानीयात् ॥ १०८ ॥

स्वानन्दयोगिरचिता
 निर्मलचेतोजनैकसंसेव्या ।
स्वानन्दचन्द्रिकेयं
 पठतां स्वानन्ददायिनी भवतु ॥१०९ ॥

Colophon:

स्वानन्दचन्द्रिका सम्पूर्णा ॥

Subject: Svātmānandacandrikā; 1-109 verses.

Remarks:—The Ms. is in a fairly good condition. After the colophon is given:—

' मूलाधारे सुप्ता कुण्डलिनीशक्तिरद्य तूत्थाय ।

सौषुम्नेन यथागमशास्त्राचक्रे शिवेन सह रन्तुम् ॥ १ ॥

आनन्दबाष्पधाराः निर्याताः स्वीयचर्मचक्षुर्भ्याम् ।
सर्वाङ्गमपि मदीयं करतलमभवत्सुधाब्धिमग्नमिव ॥ २ ॥

स्वामिन्विनैव नेत्रे दृष्टा वै विद्युतो धगद्धगिताः ।
रक्तातिरक्तपीतश्वेतत्विड्तारकाः पुरो ह्युदिताः ॥ ३ ॥

कनकमयकुसुमवृष्ट्या गगनं सर्वत्र सङ्कीर्णम् ।
रुद्रग्रन्थिविभेदो जातः स्वाभाविकेन शीलेन ॥ ४ ॥

आषाढकृष्णपक्षे नन्दनसंवत्सरे तृतीयायाम् ।
स्वानन्दचन्द्रिकेयं लिखितादित्ये च रामपुत्रेण ॥ ५ ॥

श्रीपरमशिव: शरणम् ॥'

The anthor calls himself the pupil of Ātmānanda. The work seems to be a learned disquisition.

---

## ॥ अध्यारोपणम् ॥

## 7607. ADHYĀROPAṆAM.

Ms. Not noticed by Burnell No. 15570 b.

Substance—Palm leaf. Size—16¾ × 1½ inches. Leaves—59 (175-284). Lines—5 to a Page. Script—Telugu. No. of Granthas—590. Author—Vāsudevaśiṣya. Incomplete. Not printed

Beginning:

कामीशाद्याः + गजाननम् ॥

बोधानन्दखनिं निरस्तसकलं कारुण्यपूर्णेक्षणं
मूढानामुपदेशकञ्च सततं पापात्मनां पापहम् ।
वैराग्यञ्च विरागिणं सुखकरं सम्पादनं सर्वदा
श्रीमद्देशिकवासुदेवयतिनं मूढात्मकोऽहं भजे ॥

यस्यात्मभूतस्य गुरोः प्रसादा-
दहं विमुक्तोऽस्मि शरीरबन्धात् ।
सर्वोपदेष्टुः पुरुषोत्तमस्य
तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥

मूढान्विवेकिनः कृत्वा लोके सर्वोपदेशकः ।
यस्तिष्ठति च तं श्रीमद्वासुदेवगुरुं भजे ॥

अनुग्रहार्थं मर्त्यानां संस्कृतानधिकारिणाम् ।
विवेकसारः श्रोतॄणां रच्यते भाषया मया ॥

अध्यारोपवादालचातब्रह्ममुनु येरुगवलेननि शास्त्रमंदु चेप्पंबडुदिगनुक अध्यारोपमुनु मुन्दरगानु निरूपिस्तु-न्नारमु ।

End: (Leaf No. 219)

समष्टिव्यष्टिरूपाय नुतजाड्यादिलक्षणम्(?) ।
शिवेशयोरुपाधिश्च नात्मा सम्यग्विवेचितः ॥

समष्टिव्यष्ट्युपाधिभ्यां जीव ईश्वर इत्यपि ।
भिन्नवद्भाति यस्सोयमात्माऽभिन्नश्च वस्तुतः ॥

मयि जीवत्वमीशत्वं कल्पितं वस्तुतो न हि ।
इति यस्तु विजानाति स मुक्तो नात्र संशयः ॥

Colophon:

इति सप्तमवर्णकं समाप्तम् ॥

श्रीगुरवे नमः ॥

स्थूलं सूक्ष्मं कारणं वा शरीरं किं तदात्मनः ।
विलक्षणात्वमेतेभ्यः किं वेत्येतद्विचिन्त्यते ॥

*                    *

ऐते ईविचारानकु फल मेमण्टेनु रज्जुवलने सद्रूपुण्डै जीवामृतालुं वलने
आनन्दरूपुडैनदुवण्ठि.............।

Subject: Adhyāropaṇam; on the problem of the superposition of the unreal appearance on the reality. 1-8 Varṇakas.

Remarks:—The Ms. is in a good condition. For the other works contained herein see remarks under No. 7550. This Ms. abruptly ends in the middle of the 8th varṇaka. This work by an unknown author deals with Adhyāropa. The author gives copious Telugu commentary which he calls Vivekasāra and appears to be a Telugu Brahmin.

---

## ॥ आनन्दप्रकरणव्याख्या ॥

## 7608. ĀNANDAPRAKARAṆAVYĀKHYĀ.

**Burnell's Catalogue No. 6470. Page 97. Left column. Substance—Paper. Size—9 × 4½ inches. Sheets—59. (95-153). Lines—10-11 to a Page. Script—Devanāgarī. No. of Granthas—1700. Author—?. Incomplete. Not printed.**

Beginning:

......सुखं मे स्यादिति प्रार्थनायाः त्वत्पक्षवदस्मत्पक्षेऽपि प्रो(मो)क्षविषयत्वात्तत्कामस्यापि कारिणः संभवात्तं प्रति काण्डद्वयप्रामाण्यसिद्धिरिति भावः। ननु प्रीत्युत्कर्षो मोक्षः। किं तु स्वर्गः। तत्कथं तत्कामो मोक्षकामस्स्यात्। कथं वा तं प्रति काण्डद्वयप्रामाण्यं तत्राह— धृष्टीति।

End:

न च यागादेः स्वर्गाद्यसाधकत्वे तत्कामस्य तस्मिन् विनियोगो युक्तिः। अतो नियोगवशादेव तत्र साध्यसाधनताधीः न मानान्तरादित्यर्थः। वेदे साध्यसाधनताधियो नियोगाधीनत्वेऽपि कामस्य कर्तृविशेषणत्वं लौकिकवदित्याशङ्कयाह— तथा हीति। वेदे साधनत्वस्य माना......।

Colophon: Nil.

Subject: Ānandaprakaraṇavyākhyā; a commentary on the Ānandaprakaraṇa.

Remarks:—The Ms. is in good condition.

---

## ॥ कुतर्कनिरासः ॥

## 7609. KUTARKANIRĀSAḤ.

Burnell's Catalogue No. 9884. Page 95. Left column.

Substance—Palm leaf. Size—16⅓ × 1½ inches. Leaves—40 (208-247). Lines—11 to a Page. Script—Grantha. No. of Granthas—1750. Author—?. Incomplete. Not printed.

**Beginning:**

.... .... .... .... ... .... .... .... .... ......

......लमुनिना निर्णिक्तात्मानमश्रितविग्रहं(?)
निगमशिरसां स्वाराज्ये स्वे चिरादभिषेचितम् ।
जयति समवद्देवं दास्यकुर्मभतान्त्रिकात् (?)॥

श्रीगुरुभ्योनमः । अपि चैव स्मृत्यादयोऽपि निर्विशेषं ब्रह्माऽद्वितीयं च प्रतिपादयन्ति । यथा,

"ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥"

अत्र तावद्ब्रह्मविलक्षणः प्रत्यगात्मा । स तावज्ज्ञेय उच्यते । "नारायणं महाज्ञेयं ॥" "तमेव विदित्वाऽतिमृत्युमेति" "यदा च....मं आकाशं वेष्टयिष्यन्ति मानवाः । तदाशि.... दुःखस्यान्तो भविष्यति" इत्यादि । विरोधात्परं ब्रह्मेति निषेधाच्च न चाहं वासुदेवः * * "क्षेत्रज्ञमिति तद्विदुः" इत्युक्तानुस्मरणार्थत्वेन समुच्चयासिद्धेः । तथापि सामानाधिकरण्येन स्वरूपाभेदप्रत्ययोपपत्तेश्च ।

**End:**

अपि चैवं मानान्तरागम्यत्वे सविशेषब्रह्मणः शास्त्रानि-

विषयमापद्येत । जगत्सोपादाननियन्तृकं, कार्यत्वाद्घटादिवत् । धर्माधर्मफलं सदातृकं, चेतनहिताहितक्रियाफलत्वात्, सेवापराधफलवेतनदण्डादिवदित्यादिभिरेव कारणत्वादिविशेषाणां * *

स्वात्मताविरोधिसत्ताद्येकरसतायां सत्यां सविशेषत्वं मानान्तराऽगम्यमिति तुल्यम् । एतदुक्तं भवति । यथापरस्य प्रत्यक्षाद्यनवगतरूपभेदेन ब्रह्मणस्सविशेष............।

Subject: Kutarkanirāsa; a controversial treatise on Advaita philosophy.

Remarks:—The Ms. is in a good condition.

---

॥ मुक्तिसोपानपद्धतिः ॥

## 7610. MUKTISOPĀNAPADDHATIḤ.

S. S. Collection No. 88.

**Substance**—Paper. Size—$8\frac{1}{4} \times 4\frac{1}{2}$ inches. Sheets—2-16. Lines—10 to a Page. Script—Devanāgarī. No. of Granthas—250. Author—?. Incomplete. Not printed.

**Beginning:**

.... .... .... .... .... .... .... .... .... .... .... ...

.........................................सदा ॥

पुरा रागाद्रावणो हि नष्टो राज्यादिना सह ।
तस्माद्रागो मुमुक्षोस्तु त्याज्यः सर्वात्मना दृढम् ॥

द्वेषो नाम स्वार्थविघ्ने वृत्तिर्व्यग्रा प्रकीर्तिता ।
तेन नष्टः पुरा चैद्यः तस्मात्त्याज्यो मुमुक्षुणा ॥

कामस्तु सिद्धपूर्वेऽर्थेऽप्यधिकाशा प्रकीर्तिता ।
तेन प्रणष्टो नरकः तस्मात्कामं परित्यजेत् ॥

स्वार्थालाभे तु यन्मौर्ख्यं क्रोध इत्यभिधीयते ।
तेन नष्टः पुरा कंसः ततः क्रोधं परित्यजेत् ॥

स्वकीयधनलेशं तु न दद्यां यस्य कस्यचित् ।
वृत्तिर्या जायते सैव लोभः प्राज्ञैः प्रकीर्तितः ॥

**End:**

अहंब्रह्मेत्यवस्थान्तं समाधिरित्युक्तत्वात् अखण्डस-च्चिदानन्दैकरसब्रह्माकाराकारितान्तःकरणवृत्तिसाक्षात्कारो मोक्ष इत्युक्तलक्षणो यो मोक्षः सोऽपि नित्यमुक्तस्य सर्व-वृत्तिरहितस्य केवलात्मनो मामौ(?)पचारिक एव । तस्मा-त्परमाद्वितीयपरिपूर्णसच्चिदानन्दाखण्डैकरसकेवलब्रह्माह-मस्मीति सिद्धम् ।

**Colophon:**

इति स्वानुभूतिप्रकरणपद्धतिः सम्पूर्णा ।

**Subject:** Muktisopānapaddhati; 1-7 Paddhatis.

1 रागद्वेषनिवृत्तिनिरूपणपद्धतिः ।

2 साधनचतुष्टयनिरूपणपद्धतिः ।

3 स्थूलशरीरस्वरूपनिरूपणपद्धतिः ।

4 लिङ्गशरीरनिरूपणपद्धतिः ।

5 कारणशरीरस्वरूपनिरूपणपद्धतिः ।

6 महाकारणशरीरस्वरूपनिरूपणपद्धतिः ।

7 स्वानुभूतिप्रकरणपद्धतिः ।

Remarks:—The Ms. is in a fairly good condition.

---

## ॥ वेदान्तप्रकरणम् ॥

## 7611. VEDĀNTAPRAKARAṆAM.

S. S. Collection No. 98.

Substance—Palm leaf. Size—15½ × 1¼ inches. Leaves—82. Lines—8 to a Page. Script—Grantha. No. of Granthas—8500. Author—?. Incomplete (Wants end). Not printed.

**Beginning**;

शुक्लांबरधरं + शान्तये ।

परिणतपरसत्त्वं सत्त्वमेतस्य मूलं

नरहरिवपुरैशं धाम कामं.........

.........................

अहमिति विगता धीः सञ्चरात्म्यात्मयोग्यम् ॥

कपटमतिविलासैः देशिभिर्भिन्नमार्गो-

.........................

निरवधिनि....................

.........णकारिर्णी विद्याम् ॥

अथ महावाक्यार्थमत तत्पदार्थो ब्रह्म निरूप्यते ।

........................ ।

 

(Leaf No. 16)

ननु सर्वस्य वेदस्य कार्यपरत्वं न ब्रह्मणो वेदार्थता कुतस्तस्य तदेकार्थतेति न वेदान्तं हि सिद्धपरा एव तेभ्यस्तदवगमात् सत्यादिवाक्यात कार्यस्यानवगमात् ततोऽनवगम्यमानस्यापि तदर्थत्वेऽतिप्रसङ्गात् अध्याहारस्याऽन्यायत्वात् कार्ययोग्यार्थानवगमे तदयोगात्तदर्थमात्रस्य संसर्गस्य नियोगं विनाऽनुपपत्त्यभावात् लोकेऽपि सिद्धे शब्दानां व्युत्पत्तेः शास्त्रञ्च हि तदशासनात् प्रवृत्तिनिवृत्तिशासनस्य प्रत्येकसमुदायसंमतलक्षणत्वात् हितसंस्पृष्टतदुपदेशस्य शास्त्रत्वे अतिप्रसङ्गाच्च हितञ्च सुखमेवान्यत् तत् प्रसादात्तथेति तदात्मकं ब्रह्महितं अत एव वेदान्ताः । स्वत एव पुरुषार्थनिष्ठाः एतच्च सर्वं शास्त्रनिरूपितं न वात्र वादिनोऽत्यन्तं विवदन्त इति नात्र निरूप्यते ।

एवंविधिभागोऽपि अद्वैतब्रह्मावगतिं प्राप्यैव जैमिन्याद्यभिप्राय इव विश्राम्य जैमिन्यादेरद्वैतब्रह्मावगतौ तात्पर्याभावे प्रतारकत्वं असर्वज्ञत्वं वा भवेत् ॥

End:

आत्मलाभाच्च परं विद्यत इत्यादि शास्त्रान्ब्रह्मकस्य का-

मनाप्रतिषेधात् स......मभिजायते । तत्र तत्रेति कामस्य संसारहेतुत्वश्रवणाच्च । न हि जीवस्य कामनां विना परस्य सा भवितुमर्हति । तदनिष्टं कामयते । आत्मत्वायोगात् । न च सर्वमुक्तिरेव नास्ति । अविद्यावतां ज्ञाने सति तन्नियमात् । अन्यथा स्वस्य मुक्त्ययनर्हत्वशंकया कोऽपि न प्रवर्तेत । मुक्तावपि परस्य कामनाविलये अनित्यानाम............ ।

Subject: Vedāntaprakaraṇa; a Vedāntic treatise by an unknown author:

Remarks:—The Ms. is in a fairly good condition. The first few leaves are almost decayed.

---

॥ वेदान्तोपनिषत् ॥

## 7612. VEDĀNTOPANIṢAD.

Burnell's Catalogue No. 9753 j. Page 95. Left column. Substance—Palm leaf. Size —$16\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves —5 (163-167). Lines—5 to 6 to a Page. Script—Telugu. No. of Granthas—113. Author—?. Incomplete. Not Printed.

Beginning:

श्रीगुरुभ्यो नमः । ...... श्रीशिवाय नमः ।

श्रीमत्सुरेश्वराचार्यपदाब्जभ्रमरा इमे ।

वार्त्तिकेषु रसं पीत्वा तृप्यन्त्यात्मानुभूतितः ॥

संसारकारणाविद्याध्वंसकृज्ज्ञानलब्धये ।
प्रारब्धेयं प्रयुक्तेन वेदान्तोपनिषत्परा ॥

अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः ।
तच्छब्दान्वयवार्थस्य विद्यायामेव संभवात् ॥

उपोपसर्गः सामीप्ये तत्प्रतीचीनमाप्यते ।
ता(सा)मीप्यतारतम्यस्य विश्रान्ते स्वात्मनि क्षणात् ॥

त्रिविधस्य पदार्थस्य निशब्दोऽपि विशेषणम् ।
उपनीय महात्मानं ब्रह्मापास्तद्वयं यतः ॥

निहत्य विद्यां तज्जं च तस्मादुपनिषद्भवेत् ।
निहत्यानर्थमूलं ह्यविद्यां प्रत्यक्तया परम् ॥

End:

अविद्याब्रह्मसम्बन्धमविद्यादृष्टिकल्पितम् ।
परामृशत्यतस्सिद्धमस्याविद्येत्युदीरितम् ॥

अविद्याब्रह्मदीक्षायां ब्रह्मसम्बन्धतेत्यपि ।
ब्रह्मवृत्तपरीक्षायां नानाब्रह्मस्पृगिष्यते ॥ ११३ ॥

**Colophon**: Nil.

Subject: Vedāntopaniṣad based on Sureśvaravārttika.

Remarks :—The Ms. is in a fairly good condition. For the other works contained herein see remarks under No. 1441.

---

## ॥ वेदान्तोपन्यासः ॥

## 7613. VEDĀNTOPANYĀSAḤ.

Burnell's Catalogue No. 9875 h. Page 95. Right column.

Substance—Palm leaf. Size—17½×1½ inches. Leaves —8. Lines—8 to a Page. Script—Grantha. No. of Granthas—300. Author—? Incomplete. Not printed.

**Beginning:**

...गमे दोषमाह। अन्यथेति॥ जडेति॥हेतुगतं वि- शेषणं दुःखादौ व्यभिचारादपि न वृत्तिमात्रस्य व्यवहार- हेतुतेति द्रष्टव्यं। जडस्यापि संविद्विषयस्य संभवात् तत्त्वे- नार्थान्तरतेत्याशङ्कयाह॥ न चैषामिति॥

**End:**

ननु क्रियासाध्यस्यैव फलत्वात् ज्ञानाक्रियासाध्याऽवि- द्यानिवृत्तिरेव फलं। तथा च ब्रह्मैव फलव्याप्यमिति न च वाच्यमित्याह॥ न चेति॥ हेतुमाह॥ अथेति॥ आरोपिताऽभावस्यैवाधिष्ठानमात्रत्वं प्रसाधनादिति भावः। अविद्यानिवृत्तिरधिष्ठान.... ॥

Subject: Vedāntopanyāsaḥ.

Remarks:—The Ms. is in a fairly good condition. This seems to be a commentary on some minor vedāntic work. For the other works contained herein see remarks under No. 1500.

---

॥ परमहंसचर्या ॥

## 7314. PARAMAHAMSACARYĀ.

**Burnell's Catalogue. No. 9596 a.**

Substance—Palm leaf. Size—18¾×1 inches. Leaves—166.

Lines—5 to a Page. Script—Grantha. No. of Granthas —3200. Author—Sadāśivabrahman. Complete. Not Printed.

Beginning:

यस्मिन्नाभाति विश्वश्रीर्मरावित्र तरङ्गिणी ।
तमानन्दघनं वन्दे भगवन्तं जगद्गुरुम् ॥ १ ॥

श्रुतिस्मृतिपुराणादिशास्त्रेषु प्रतिपादिताम् ।
लिखामि परहंसानां चर्यामार्यजनेडिताम् ॥ २ ॥

परमहंसचर्या हि यमनियमभेदेन द्विविधा । यमनियमौ च असूत्रयत् पतञ्जलिः ' अहिंसासत्यमस्तेयब्रह्मचर्याऽपरिग्रहा ' इति यमाः ॥

End.

सुखेन वर्तध्वमविद्ययागतं
मनुष्यभावं च विहाय देहजम् ।
विहाय सङ्कल्पविकल्पवासना-
मनुग्रहेणाहमवोचमास्तिकाः ॥ १२ ॥

Colophon:

इति उपपुराणसंग्रहस्समाप्तः ।

Subject: Paramahamsacarya; an elaborate treatise on the nature and characterestics of the Paramahamsas with profuse quotations from the Upaniṣads, Smṛtis and Purāṇas.

Remarks:—The Ms. is in a decaying condition. It contains the text more fully than 7615. It runs up to the end of the sec-

tion giving the substance of all the upapurāṇas which section follows the Bhāgavatasaṅgraha. For other details see under No. 6709. The other work contained herein is Ātmavidyāvilāsa. Dr. Burnell has not noticed this work under this Number.

---

॥ परमहंसचर्या ॥

## 7615. PARAMAHAMSACARYĀ.

Burnell's Catalogue No. 9858.

Substance—Palm leaf. Size—$11\frac{1}{2} \times 1\frac{1}{4}$ inches. Leaves —165 (2-166). Lines—6 to a Page. Script—Grantha. No. of Granthas—2500. Author—Sadāśivabrahman. Incomplete. Not printed.

Beginning and subject—Same as No. 7614.

**End:**

स्वभाग्यं श्लाघते द्वाभ्याम् ॥

स्वन्यायां रचिते लोके वस्तुबुद्ध्या गृहादिषु ।

भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥ ६ ॥

Colophon: (Leaf No. 162)

इत्यष्टमस्कन्धसारसंग्रहः ।

Remarks:—The Ms. is in good condition.

For other works contained herein vide remarks under 7137. Dr. Burnell does not notice all the works in this Ms. He notices only the Svānubhūtiprakāśikā.

---

## ॥ परमहंसचर्या ॥

## 7616. PARAMAHAMSACARYĀ.

Burnell's Catalogue No. 9856 c.

Substance—Palm leaf. Size—$11\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—212 (3-214). Lines—7 to a Page. Script—Grantha. No. of Granthas—3200. Author—Sadāśivabrahman. Complete. Not printed.

Beginning, end, colophon and subject—Same as No. 7614.

Remarks:—The Ms. is in good condition. The other works contained herein, are:—

१ स्वानुभूतिप्रकाशिका २ आत्मविद्याविलासः ३ स्वप्नोदितम् ४ आत्मानुसन्धानम् ।

Dr. Burnell has not noticed this work under this No.

---

## ॥ परमहंसचर्या ॥

## 7617. PARAMAHAMSACARYĀ.

Burnell's Catalogue No. 9857 c.

Substance—Palm leaf. Size—$18\frac{1}{2} \times 1\frac{1}{4}$ inches. Leaves—82 (1-82). Lines—8 to a Page. Script—Grantha. No. of Granthas—3200. Author—Sadāśivabrahman. Complete. Not Printed.

Beginning, end, colophon and subject—Same as No. 7614.

Remarks:—The Ms. is in decaying condition. The other works contained herein are the same as under No. 7616.

This work has not been noticed by Dr. Burnell under the above No.

---

## ॥ परमहंसचर्या ॥

## 7618. PARAMAHAMSACARYĀ.

Burnell's Catalogue No. 9535 a.

Substance—Palm leaf. Size—19×11½ inches. Leaves—174 (1-174). Lines—7 to a Page. Script—Grantha. No. of Granthas—3200. Author—Sadāśivabrahman. Incomplete, Not printed.

Beginning, end, colophon and subject—Same as No. 7614.

Remarks:—The Ms. is in good condition. The other work contained herein is Ātmavidyāvilāsa.

Dr. Burnell has not noticed this work under this No.

---

## ॥ प्रणवार्थप्रकाशिकाव्याख्या ॥

## 7619. PRAṆAVĀRTHAPRAKĀŚIKĀ-VYĀKHYĀ.

Burnell's Catalogue No. 9882 b. Page 95. Right column.

Substance—Palm leaf. Size—16¾×1¼ inches. Leaves—25. Lines—8 to a Page. Script—Grantha. No. of Granthas—500. Author—Kaivalyānandatīrtha. Complete, Not Printed.

Beginning:

मत्स्यः स्नानपरः फणी पवनभुक् मेषस्तु पर्णाशनो
नीराशी स तु चातकः प्रतिदिनं शाल्यबलं(?) मूषिकः ।
भस्मोधूलनतत्परः खलु खरः ध्याने रतो वै बकः
किं तेषां फलमस्ति तेन विधिना ज्ञानप्रधानं (तपः) ॥

सर्वोपनिषदां सारभूतेन प्रणवेन यम् ।
जानन्ति यतयः सच्चित्सुखाद्वैतमवैम्यहम् ॥

इह खलु श्रीमान् कैवल्यानन्दयोगीश्वरो नाम कश्चिद्विपश्चित् बहुजन्मसुकृतनिकरपरिपाकवशादुपजातेश्वरानुग्रहसमासादितकरतलामलकीकृतपरब्रह्मतत्त्वः परमकारुणिकश्रीगुरूपदिष्टप्रणवार्थज्ञानात् विगलितनिखिलबन्धः स्वयं नित्यनिरतिशयानन्दस्वप्रकाशनिष्प्रपञ्चपरिपूर्णप्रत्यगात्मानमनुबोभूयमानौ(नो) मुमुक्षुजनतासमनुजिघृक्षया तापनीयोपनिषत्प्रतिपादितप्रकारेण प्रणवार्थं कैश्चिच्छ्लोकैस्संजग्रीगृहीष्ट । ते च यथामति व्याख्यायन्ते ।

अकारोकारवर्णाभ्यां + तथोमिति ॥

End:

य इत्थं + आनन्दवारिधिः ॥

एवं गुरोः सकाशादोंकारतत्त्वं सम्यग्ज्ञात्वा उक्तप्रकारेण मनः स्वात्मनि प्रणिदधन् परमहंसः अत्रैव सर्वानर्थेभ्यो विमुक्तस्सदा स्वप्रकाशपरमानन्दरूपेणावतिष्ठेत ॥ "ब्रह्मविदाप्नोति परं," "तरति शोकमात्मवित्" "यो वेद निहितं गुहायां" "सोऽविद्याग्रन्थिं विकिरतीह सोम्य," "भिद्यते हृदयग्रन्थिः" "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतिशतेभ्यः ।

श्रीमहादेवतीर्थानां शिष्येण यतिनां कृते ।
कृता कैवल्यतीर्थेन प्रणवार्थप्रकाशिका ॥

ग्रन्थकर्ता स्वस्य प्रथितविभवमाह— योगिपरमहंसेश्वरशिष्यताकीर्तनेन स्वकृतश्रुत्यन्तरहस्यप्रणवार्थसुग्रहात्मकप्रकरणस्य परमहंसैरेव विज्ञेयतां प्रदर्शयन् अर्थाद्गृहस्थादीनां यतीनामपि परमहंसव्यतिरिक्तानां प्रदर्शनीयतां सूचयन् ग्रन्थनामनिर्देशपूर्वकं प्रकरणमुपसंहरति— श्रीमहादेवेति ।

स्वप्रकाशचिदानन्दसाक्षित्यप्रत्यगद्वयः ।
नृसिंहवाक्यगम्योऽहमसंगः परमेश्वरः ॥

Colophon.

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमहादेवतीर्थपूज्यपादशिष्यश्रीकैवल्यानन्दतीर्थभगवत्पादकृता स्वकृतप्रणवार्थप्रकाशिकाव्याख्या समाप्ता । ओं सांबपरमेश्वराय नमः ।

Subject: Praṇavārthaprakāśikāvyākhyā, a commentary by the author on his own Praṇavārthaprakāśikā.

Remarks:—The Ms. is in a fairly good condition. The other works contained herein are:—

१ अष्टाङ्गयोगः २ सोपानपञ्चकम् ३ प्रणवार्थप्रकाशिका ।

The author of this work calls himself as the desciple of Mahādevatīrtha and himself commented his own work expounding the meaning and significance of Praṇava as given in Tāpanīyopaniṣad.

## ॥ उपदेशसारः ॥

## 7620. UPADEŚASĀRAḤ.

Burnell's Catalogue No. 6413. Page 98. Left column. Substance—Paper. Size—9¾ × 4½ inches. Sheets—27. Lines—11 to a Page. Script—Devanāgarī. No. of Granthas—600. Author—Viśvanātha. Complete. Not printed.

**Beginning :**

श्री विघ्नेश्वराय नमः ॥

यत्सर्वं सकलं प्रवृत्तिरखिला यं चाश्रितो येन तत्
भातीदं प्रियमत्र जातमनिदं यस्मै यतोऽभूज्जगत् ।
यस्यात्मत्वमवाप्य संसृतिरगादन्तर्हि यस्मिन्निदं
स त्वं श्रीनृहरे ममाप्यनुभवं देहि स्वयं तादृशम् ॥

करण...गणानामीशमाद्यं गणेशं
परतरनिजरूपावृत्तिविघ्नैकनाशम् ।
धृतभवरतवृत्तिच्छेदसद्वेदपाशं
मम हृदयनिवासं तं नमाम्यात्मभासम् ॥ २ ॥

* *

घटादेस्स्फुरत्ता तदीया च सत्ता
तदानन्दता यत्त एवोद्गतातः ।

* *

अयं तत्त्वहं ज्ञातमित्थं प्रसादात्
गुरोर्यस्य तं काशिराजं नमामि ॥ ४ ॥

इत्थं नत्वा गुरुं देवं विश्वनाथेन धीमता ।
उपदेशस्य सारोऽयं ग्रन्थमुद्रूथ्यते मया ॥

श्रीमच्छङ्करभावार्थमाकलय्य हृदा परम् ।
तद्ग्रन्थार्थपथायं(च) रच्यते स्वसुखाय हि ॥

नन्विदं वेदान्तप्रकरणं । प्रकरणं नाम
"शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम शास्त्रभेदं विपश्चितः ॥' इति ॥

End:

किं पल्लवितेन । नायं शरीरमात्रार्थेच्छानिच्छापरेच्छा-
प्रापितानि सुखदुःखलक्षणानि आरब्धफलानि अनुभवन्
अन्तःकरणभासादीनामवभासकस्सन् तदवसाने सति अ-
ज्ञानतत्कार्यसंस्काराणामविनाशात् परमकैवल्यमानन्दै-
करसं × ब्रह्म अवतिष्ठते । × ×
न स पुनरावर्तते । ओं तत्सद्ब्रह्मार्पणमस्तु ।

Colophon:

इति श्री उपदेशसारे ससाधनजीवन्मुक्तिनिरूपणं नाम दशम
उल्लासः । समाप्तोऽयं ग्रन्थः । इति श्री विश्वनाथस्वामिविर-
चित उपदेशसारग्रन्थः संपूर्णः ।

श्रीकृष्णार्पणमस्तु ।

Subject: Upadeśasāra, a prakaraṇa in 10 Ullāsas modelled after Śri Śaṅkara's Upadeśasāhasrī.

Remarks:—The Ms. is in a fairly good condition. There is a

transcript copy of this Ms. in the library. Vide T. V. No. 455. The author should have belonged to Northern India as he mentions Kāśirāja as one of his Gurus.

---

॥ पञ्चरत्नकारिका ॥

## 7621. PAÑCARATNAKĀRIKĀ.

P. A. Collection No. 81.

Substance—Paper. Size—$9\frac{7}{8} \times 4\frac{1}{8}$ inches. Sheets—15. Lines—8-10 to a Page. Script—Devanāgarī. No. of Granthas—800. Author—Sadāśiva. Complete. Not printed.

**Beginning**:

श्रीगुरुभ्यो नमः ॥

रामेन्द्रस्वामिनं वन्दे सच्चिदानन्दविग्रहम् ।
मुमुक्षूणामभयदं ब्रह्मात्मैक्यप्रदं गुरुम् ॥ १ ॥

यत्कृपालेशतो वाणीं पवित्रीकर्तुमुद्यतः ।
सदाशिवः करोतीमाः पञ्चरत्नस्य कारिकाः ॥ २ ॥

॥ मू ॥

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिभूयतां भवसुखे दोषोऽनुसन्धीयताम्
आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥

व्याख्या कारिकाः ॥

अस्यार्थः । अत्रेदमभिधीयते ।

इह तु ब्रह्मचर्याङ्गसाधनेन द्विजोत्तमः ।
स्वाध्यायविधिना सम्यक् तदर्थग्रहणो भवेत् ॥ ३ ॥

**End:**

* *

शुद्धां वाणीं तथा बुद्धिमकरोन्मुक्तिसिद्धये ।
श्रीमद्रामेन्द्रकृपया शिवमूलं शिवांग्रजः ।
कारिकाः पञ्चरत्नानामकरोत्परितुष्टये ॥

**Colophon:**

इति श्रीमत्पञ्चरत्नस्य कारिकाः समाप्ताः ।
श्री सदाशिवार्पणमस्तु ।

**Subject:** Pañcaratnakārikā, a commentary on Śaṅkāra's Upadeśa Pañcaratna, in Kārikās.

**Remarks:**—The Ms. is in a fairly good condition.

Sadāśiva, the author of this metrical commentary on Śrī Śaṅkara's Upadeśapañcaratna, is the pupil of one Ramendrasvāmin and thus is to be distinguished from the famous Sadāśivabrahman.

---

## ॥ वेदान्तसंग्रहव्याख्या–प्रकाशिका ॥

## 7622. VEDĀNTASAṄGRAHAVYĀKHYĀ–PRAKĀŚIKĀ.

**Burnell's Catalogue No. 9801. Page 94. Right column.**

**Substance**—Palm leaf. Size—16¾ × 1½ **inches. Leaves**—138. Lines—7-9 to a Page. Script—Grantha. No. of Granthas—4500. Author—Mahādevendramuni. Complete. Not printed.

Beginning:

श्रीमत्स्वयम्प्रकाशाख्यमहते महसे नमः ।
यन्मोहतिमिरोद्दण्डचण्डभानुशतायते ॥

वेदान्तसंग्रहग्रन्थं व्याकरोमि यथामति ।
स्वबुद्धिशुद्ध्यै योगीन्द्राः क्षन्तुमर्हन्ति साधवः ॥

समुद्रकलशन्यायात्स्वधर्मादेव केवलम् ।
महादेवमुनीन्द्रेण पूज्यते गुरुरादरात् ॥

श्रीगुरोः कृतिसम्बन्धान्मद्वाक्यं श्लाघ्यमेव हि ।
रथ्योदकं यथा गङ्गाप्रवाहपतनाच्छुभम् ॥

इह खलु लोकानुग्रहार्थमवतीर्णो भगवांश्चन्द्रचूडः स्वयम्प्रकाशाभिधानोऽस्मद्गुरुः जननमरणरूपसंसारमहातापतप्तानां भाष्यादिमहानदीप्रवाहगमनासमर्थानां तापनिवृत्त्यर्थं प्रपापरिकल्पनमिव ऋजुमार्गेण ब्रह्मात्मविज्ञानाय वेदान्तसंग्रह इति प्रकरणं कर्तुमविघ्नेन परिसमाप्त्यर्थमाशीर्नमस्क्रियावस्तुनिर्देशो वेति न्यायात् शिष्टाचारपरिप्राप्तमादौ स्वगुरुनमस्काररूपं मंगलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति ।

मू ॥ गोपालयोगीन्द्रगुरोः प्रसादात्
ब्रह्माहमेतन्मयि भाति विश्वम् ।
स्वयम्प्रकाशो मुनिरादरेण
तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥

**End:**

॥ मू ॥

आरण्ये रविशशिधूमकेतुवाचां
ध्वंसन्तौ स्वयमवशिष्टमेकमुक्तम् ।
यज्ज्योतिर्विमलमनन्तमद्वितीयं
तं रामं गुणनिधिमाश्रयेऽभिरामम् ॥

* *

एवं प्रलयजलधिकल्पनिरवधिकानन्दरूपत्रिविधपरिच्छेदरहितमतएव विमलमतएवाप्रमेयानन्दरूपत्वादेव गुणनिधिमतएवाभिरामं श्रीराममहमाश्रये सेवे ॥

यदज्ञता लोकसृतिप्रवर्धिका
वदन्ति शास्त्राणि च कोटिशो यम् ।
यदात्मनात्मानमयासिषं तं
स्वयंप्रकाशं गुरुमाश्रयेऽहम् ॥

श्रीमत्स्वयंप्रकाशाय गुरवे स्वात्मने नमः ।
यदत्यन्तं तपः पक्वं निवेदितमिदं फलम् ॥

स्वयम्प्रकाशयोगीन्द्रपादप्रवणचेतसा ।
यथामति व्याकृताऽयं मया वेदान्तसंग्रहः ॥

मया कृतेयं वेदान्तसंग्रहस्य प्रकाशिका ।
विद्वद्योग्यस्य गरुडसंचारे(?) माक्षिकागतिः ॥

एकाक्षरार्थज्ञानेन कृती वेदान्तसंग्रहे ।
भवेदित्यादरेणायं स्वधर्मत्वात् ........ ॥

गुरोर्वीक्षा पेतत्पुंसि यदि मूकोऽपि वाक्पतिः ।
स्याल्लंघयेद्गिरिं.... ............ ॥

.................................... ।

........ ......... .......गुरुकृपारसम् ॥

अद्वैतरसपूर्णाब्धौ पूरितेत्यविवक्षया ।
सुरानन्यो नरो(?) मज्जन्मद्व्याख्याख्ये भवेत्कृती ॥

किं प्रत्युपकृतिं कुर्मो...कस्य भवाद्गुरोः ।
अर्पयामि ममात्मानं स्वयम्पूर्वप्रकाशके ।

Colophon:

इति श्रीवेदान्तसंग्रहव्याख्यानं समाप्तम् ॥

स्वयम्प्रकाशमुनिना कृतो वेदान्तसंग्रहः ।
यज्ञनारायणाख्येन लिखितष्टीकया सह ॥

बिन्दु + सज्जनाः ॥

Subject: Vedāntasangrahavyākhyā; a commentary on Vedāntasangraha of Svayamprakāśa a short Prakaraṇa in verses.

Remarks: —The Ms. is in a fairly good condition. After the colophon is given the following verse:—

वीणावादनचतुरा शोणाधरसंगि चारुदशनाभा ।
वाणी वसतु ममेशा वाणीदेशे वरप्रदा देवी ॥

The Ms. seems to have been written by one Yajnanārāyaṇa.

The author is a desciple of Svayamprakāśamuni who in his turn is the desciple of Gopāla Yogīndra and is the author of many Vedānta works like Haratattvamuktāvalī.

---

॥ वेदान्तसंग्रहव्याख्या—प्रकाशिका ॥

## 7623. VEDĀNTASANGRAHAVYĀKHYĀ—PRAKĀŚIKĀ.

Burnell's Catalogue No. 9802. Page 98. Right column. Substance—Palm leaf. Size—16×1½ inches. Leaves—195. Lines—6-7 to a Page. Script--Telugu. No. of Granthas—4500. Author—Mahādevendramuni. Complete. Not Printed.

Beginning, end, colophon and subject- Same as No. 7622.

Remarks:—The Ms. is in a fairly good condition. This Ms. is a copy of the previous one.

---

॥ अनिर्वचनीयख्यातिसिद्धिः ॥

## 7624. ANIRVACANĪYAKHYĀTISIDDIḤ.

S. S. Collection No. 107.

Substance— Palm leaf. Size—14½×1½ inches. Leaves—89. Lines —8-9 to a Page. Script—Telugu. No. of Granthas—1000. Author—?. Incomplete. Not printed.

Beginning:

श्रीगणपतये नमः ।

सदनन्तचिदानन्दे जगती यत्र जायते ।
रजतादीव शुक्त्यादौ तदेवाहं परा गतिः ॥

ननु देशान्तरीयरजतादेरेव भानोपपत्तौ इदं रजतमित्यादिभ्रमस्थले शुक्त्यादौ रजताद्युत्पत्तिकल्पनेन गौरवादिति चेन्न ।

End:

अपि च फलैरपि घटो न घट इत्यादि भ्रमे घट इत्यादि ज्ञानस्य निर्धर्मितावच्छेदकस्यैव विरोधित्वमुच्यते । तन्न्यायेन शुद्धमिति तदन्यत्वरूपजत्वविशिष्टस्याविद्यादिभ्रमां प्रति शुद्धचिन्मात्रगोचरज्ञानस्य विरोधित्वं निष्प्रत्यूहं । न च परमते तादृशभ्रमेच्छाविरहविशिष्टस्यैव तादृशज्ञानस्य विरोधित्वं । सिद्धान्ते तु उक्तज्ञानमात्रस्य विरोधित्वमिति वैषम्यमिति वा.... वीतरागपुरुष एव मोक्षहेतुज्ञानोदयेन तादृशज्ञानस्य.. भ्रमेच्छाविरहविशिष्टत्वात् ।

Subject: Anirvacanīyakhyātisiddhi.

Remarks:—The Ms. is in good condition.

The name of the work is not known but it deals with Anirvacanīyakhyātisiddhi.

---

## ॥ बोधसारः ॥

## 7625. BODHASĀRAḤ.

J. L. Collection No. 986.

## ॥ सर्वदर्शनसंग्रहः ॥

## 7627. SARVADARŚANASAṄGRAHAḤ.

Burnell's Catalogue No. 9865. Page 98. Right column. Substance—Palm leaf. Size—$15\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—149. Lines—6 to a Page. Script—Telugu. No. of Granthas—8500. Author—Vidyāraṇya. Complete. Printed.

**Beginning:**

नित्यज्ञानाश्रयं वन्दे निःश्रेयसनिधिं शिवम् ।
येनैव जातं मह्यादिकार्यजातं सकर्तृकम् ॥

* *

अथ कथं परमेश्वरस्य निःश्रेयसप्रदत्वमभिधीयते । बृहस्पतिमतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण तस्य दूरोत्सारितत्वात् ।

**End:**

'तत्तु समन्वयात्' इति चतुर्थे सूत्रे प्रथमवर्णकेन वेदान्तानां ब्रह्मणि तात्पर्यं प्रतिपाद्यविधिशेषतया ब्रह्मप्रतिपादकत्वं प्रत्यक्षेऽपि दिङ्मात्रं प्रदर्शितम् । शिष्टं शास्त्र एव स्पष्टमिति सकलं समञ्जसम् ॥

**Colophon:**

इति सायणाचार्यविरचिते ......सकलदर्शनशिरोऽलङ्काररत्नं श्रीमच्छाङ्करदर्शनम् ॥

सर्वदर्शनसंग्रहं(हः) सम्पूर्णम्(ः) ॥

Subject: Sarvadarśanasaṅgraha: A treatise dealing with the main doctrines of the different schools of Indian Philosophy: i. e.

चार्वाक, बौद्ध, जैन, रामानुज, पूर्णप्रज्ञ, नकुलीपाशुपत, शैव प्रत्यभिज्ञा, रसेश्वर, वैशेषिक, नैय्यायिक, जैमिनि, पाणिनि, साङ्ख्य, योग, and शाङ्करदर्शन.

Remarks:—The Ms. is in a fairly good condition. This work is published with a commentary by Bhandarkar Oriental Research Institute, Poona. It is also translated into German by P. Deussen.

---

## ॥ चतुर्मतसारसंग्रहः ॥

## 7628. CATURMATASĀRASAṄGRAHAḤ.

Burnell's Catalogue No. 9859 b. Page 93. Right column. Substance—Palm leaf. Size—13 × 1½ inches. Leaves—58 (1-22+21-56). Lines—9 to a Page. Script—Grantha. No. of Granthas—2000. Author—Appayyadīkṣita. Complete. Not printed.

Beginning:

......नमः ।

(यत्राना)माप्यशाखोदितफलविततिः प्रौढनानारसाढ्या
यस्मिन् मूलं निरूढं फलमधिकतरस्वादुनारुह्य लभ्यम् ।
यस्य प्रेक्षैव देहद्वयतदनुगतप्रत्यगस्सौपि विद्वचे(?)
सूत्रात्मा पारिजातस्सकलमभि(मतं) मह्यमर्थं स दद्यात् ॥१॥

आनन्दतीर्थमुनिलक्ष्मणदेशिकेन्द्र-
श्रीकण्ठयोगिपदवीरदवीयसीर्नः ।
आचार्यपादसरणिं च विविच्य सोऽर्थं
संगृह्यते मतचतुष्टयसारलेशः ॥ २ ॥

आदावानन्दतीर्थीयामनुसृत्य मतस्थितिम् ।
न्यायमुक्तावली रम्या विशदार्था विरच्यते ॥ ३ ॥

ओं अथातो ब्रह्मजिज्ञासा ।

ब्रह्म स्वप्रभमेव जीवमखिलैर्धर्मैरपेतं सदा
वेदान्ताः प्रतिपादयन्ति बलिभिस्तात्पर्यलिङ्गैर्युताः ।
किं तत्रास्ति विचारणीयपदवीमादौकमानं सता-
माचार्येण यदर्थमत्र भवता शास्त्रं समारभ्यते ॥

End:

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥

इति निरवग्रहमीश्वरतागुणमभ्युपगच्छसि विश्वपतौ
भवति शतक्रतुनीतिसमाश्रयणाचदुपासनसिद्धजने ।
श्रुतिरपि तस्य विभूतिमनेकविधां महतीमुपदर्शयते
तदखिलविष्टपसृष्ट्युपसंहरणाद्य........ ॥

........................................................

..................................मिमां नियताम् ।
न यदुपलभ्यमुपासनया कृतयापि न तल्लभते पुरुषः
प्रभवति तत्र तु साम्बशिवः परमेश्वर एव महामहिमा ॥

कविराजविराजितम् ॥

Colophon: (Leaf No. 22)

इति श्रीमत् + अप्पय्यदीक्षितस्य कृतौ चतुर्मतसारसंग्रहे न्यायमुक्तावल्याख्ये प्रथमपरिच्छेदे चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

Leaf No. 21.

इति + चतुर्मतसारसंग्रहे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

Leaf No 37.

इति + चतुर्मतसारसंग्रहे नयमणिमालाख्ये तृतीयपरिच्छेदे चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

Leaf No 58.

इति + चतुर्मतसारसंग्रहे नयमञ्जर्याख्ये चतुर्थपरिच्छेदे चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

नयमञ्जर्याख्यश्चतुर्थपरिच्छेदः समाप्तः । हरिः ओं ।

करकृतं + सन्तः ॥

Subject: Caturmatasārasaṅgraha, a compendium of the four schools of thought based on the Brahmasūtras.

I. Pariccheda leaves 1-22: Nyāyamuktāvalī—The Mādhva School.

II. Pariccheda: This is missing completely excepting for the last one leaf number 21, giving us the colophon. This chapter is called Nayamayūkhamālikā and expounds the Rāmānuja School.

III. Pariccheda 21-37: Nayamaṇimālā: The Śaiva School of Śrīkaṇṭha.

IV. Pariccheda: 37-58: Nayamañjarī: The Advaita School of Śrī Śaṅkara.

Remarks :—The Ms. is in a fairly good condition. It seems to be really made up of two originally different bundles for after leaf No 22, the numbering is not in Grantha Characters but in Telugu.

This work of Śrī Appayya Dīkṣita is a Synopsis of the four Vedantic Schools of Dvaita, Viśiṣṭādvaita and Advaita and Śivādvaita. Each school is dealt with in one Pariccheda which is further split into chapters according to those of the Brahmasūtras. The chapter on Advaita is written in verses, in all the different metres.

Of these, the Viśiṣṭādvaita chapter alone, called Nayamayūkhamālikā, has been printed in the Viśiṣṭādvaita Vaijayantī, a collection of Viśiṣṭādvaita works, by V. N. Kṛṣṇamāchāriar at Tirunāgeśvaram, Kumbhakoṇam.

The chapter on Śaiva, Nayamaṇimālā, has been printed along with the author's Śivārkamaṇidīpikā by Pandit Hālāsyanātha Śāstri in his Bhāratīmandiram Sanskṛt Series.

There is a transcript copy of this Ms. in this library vide T. V. No. 66.

---

## ॥ वादनक्षत्रमालिका ॥

## 7629. VĀDANAKṢATRAMĀLIKĀ.

Burnell's Catalogue No. 6493. Page 91. Right column.

Substance—Paper. Size—$11\frac{3}{4} \times 5\frac{1}{2}$ inches. Sheets—181

(Sheets 25-26-27-30-41 to 55 sheets are missing). Lines —12 to a Page. Script—Devanāgarī. No. of Granthas—4000. Author—Appayyadīkṣita. Incomplete. Printed.

Beginning:

श्रीगणेशाय नमः ॥

तन्त्रान्तरेष्वनुपपादितमर्थजातं
यत्सिद्धवद्व्यवहृतं ध्वनितं च भाष्ये ।
तस्य प्रसाधनमिह क्रियते नयोक्त्या
बालप्रियेण मृदुवादकथापथेन ॥ १ ॥

* *

कुण्डपायिनामयनाख्ये सत्रे श्रूयते । 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इति ।

End:

न खलु ब्रह्मानन्दाभावान्मुक्तः कश्चिन्मनुष्यगन्धर्वानन्दमात्रमनुभवन्नस्ति । सर्वेषां मुक्तानां निरतिशयब्रह्मानन्दानुभवसत्त्वात् । तस्मात्त्वदनुमानं बाधितविषयं न तु मदनुमानमिति सर्वे वैषयिकानन्दाः शेषाः परब्रह्मानन्दस्येति सिद्धम् ॥

Colophon:

इति ब्रह्मानन्दवैषयिकानन्दाभेदसमर्थनवादः ।

इति श्रीमत् भरद्वाजकुलजलधिकौस्तुभाद्वैतविद्याचार्यविश्वजिद्याजि श्रीरङ्गराजाध्वरिसूनोरप्पय्यदीक्षितस्य कृतौ

नक्षत्रमालिका सम्पूर्णा। श्रीरस्तु ॥

विश्वगुरोः + तनूजः ॥

Subject: Vādanakṣatramālikā ; 27 discussions on various topics as pūrvapakṣas in the Śaṅkara Bhāṣya.

**Remarks:**—The Ms. is in a decaying condition.

This controversial work of Appayya Dīkṣita has been published by the Śrī Vāṇi Vilās Press, Srirangam. Of the 27 Vādas in this work, the first 8 relate to topics of the Pūrvamīmāṃsā, while the remaining 19 deal with topics of the Uttaramīmāṃsā. Hence the work is also called Pūrvottaramīmāṃsā Vāda Nākṣatramālā.

---

॥ वादनक्षत्रमालिका ॥

## 7630. VĀDANAKṢATRAMĀLIKĀ.

Burnell's Catalogue No. 9679. Page 91. Right column. Substance—Palm leaf. Size—18¼ × 1½ inches. Leaves—149. Lines—5 to a Page Script—Telugu. No. of Granthas—4500. Author—Appayadīkṣita. Complete. Not Printed.

Beginning, end, colophon and subject—Same as No. 7629.

**Remarks:**—The Ms. is in a fairly good condition.

---

॥ षड्दर्शनीसिद्धान्तसंग्रहः ॥

## 7631. ṢAḌDARŚANĪSIDDHĀNTASAṄGRAHAḤ.

Burnell's Catalogue No. 6197. Page 96. Right column.

Substance—Paper. Size—10½ × 4¼ inches. Sheets—54. Lines—8 to a Page. Script—Devanāgarī. No. of Granthas—900. Author—Rāmabhadradīkṣita and others. Complete. Not printed.

Beginning :

श्री गणेशाय नमः ॥

प्रदिशतु मङ्गलमनिशं

पञ्चाननसूनुरङ्कुतः करटी ।

सञ्चरति स्वैरं य-

स्सरसं निखिलागमाग्रेषु ॥ १ ॥

कटाक्षैर्लब्धात्मा तव क इति पृष्टे स्वरजिता

क्रियैव प्रत्युक्तिर्भवतु भवदीया न कथये ।

इति स्वाभिप्रायं मधुरदरहासेन गृणतीं

शिवामीशः श्लिष्यन् भवतु भवतः स्मेरवदनः ॥ २ ॥

अस्ति व्यानम्रवैरिक्षितिपतिमकुटश्रेणिमाणिक्यजाल-

प्रेङ्खोलस्फारदीप्तिप्रकरकृतपदाम्भोजनीराजनश्रीः ।

श्रीमत्त्यागेशपादाम्बुरुहविहरणायत्तचित्तद्विरेफ-

स्मेरापाङ्गप्रसारप्रतिविहितसुधीमण्डलाखण्डलक्ष्मीः ॥ ३ ॥

अस्तोकश्रीमदेकप्रभुसुकृतपरीपाकसम्प्राप्तजन्मा

दीपाम्बागर्भदुग्धाम्बुधिलहरिसमुद्भावितः पारिजातः ।

वाणीवेणीविराजद्बकुलपरिमलोदारसाहित्यसारः

सारङ्गाक्षीविलक्षीकरणमनसिजः शाहजिक्ष्माधिराजः ॥ ४ ॥

सर्वज्ञानिधिना तेन शाश्वतीं कीर्तिमिच्छता ।
सभालङ्कारतां नीतास्सादरं प्रेरिता बुधाः ॥ ५ ॥

षड्दर्शनीस्थसिद्धान्तान् सङ्गृह्णीत यथोचितम् ।
सर्वेषामुपकाराय सरलैर्वचनैरिति ॥ ६ ॥

रामभद्राध्वरिवरो रामनाथमखीश्वरः ।
नरहर्यध्वरिमणिः पेरियप्पबुधाग्रणीः ॥ ७ ॥

श्रीवेङ्कटेशविबुधः श्रीमान्यज्ञेश्वराध्वरी ।
मखी च श्रीनिवासार्यो महतामपि सम्मतः ॥ ८ ॥

शासनाक्षरमाकर्ण्य शाहराजस्य धीमतः ।
सप्तैते शास्त्रसिद्धान्तान् सङ्गृह्णन्ति यथामति ॥ ९ ॥

प्रथमं सङ्ग्रहश्लोकः ।

अष्टौ चाष्टौ पदार्थाः पदनयनमते तन्मितिर्मुक्तिहेतुः
षट् ते वैशेषिकाणामथ विधिविहितं कर्मकाम्याच भिन्नम् ।
भाट्टप्राभाकराणामुपनिषदुदितं ज्ञानमद्वैतिनाञ्चेत्
.........स च समवहितो योगिनां योगसिध्या ॥ १० ॥

प्रथमं न्यायमतं लिख्यते । तत्र प्रतिपाद्यविषयाः प्रमाणादयः षोडशपदार्थाः । तेषां तत्त्वज्ञानान्मोक्षप्राप्तिः फलम् । तथा च सूत्रम् । प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छल-जातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति । तत्र

प्रमायाः करणं प्रमाणम् । प्रमा च यथार्थानुभवः अनुभवो
नाम स्मृतिव्यतिरिक्तं ज्ञानम् । तत्र साधारणकारणं करणम् ।
तच्च प्रमाणं चतुर्विधम् । प्रत्यक्षमनुमानमुपमानं शब्द इति ।

End:

असदुत्तरं जातिः । वाचोत्कर्षसमादिभेदेन बहुवि-
धाः । अनित्यः शब्दः कृतकत्वात् घटवदित्यत्र तद्वदे-
वास्य मूर्तत्वं स्यादित्युत्कर्षसमजातिः । पराजयहेतुनिग्र-
हस्थानं तच्च न्यूनाधिकभेदाद्बहुविधम् । तेषां षोडशपदा-
र्थानां तत्त्वज्ञानादेकविंशतिदुःखध्वंसात्मकमोक्षप्राप्तिरिति
सिद्धम् ॥

Colophon:

इति सर्वदर्शनसिद्धान्तसंग्रहे न्यायमतसिद्धान्तसंग्रहः
समाप्तः ।

॥ अथ वैशेषिकमतं निरूप्यते ॥

Beginning:

तन्मते पदार्थाः षट् तेषां तत्त्वज्ञानान्मोक्षप्राप्तिः ।
तथा सूत्रम् । अर्थाः षट्पदार्थाः । साधर्म्यवैधर्म्याभ्यां
तत्त्वज्ञानं निःश्रेयसहेतुरिति ।

End:

एतन्मते च प्रमाणं द्विविधं । प्रत्यक्षमनुमानं च । श-
ब्दस्यानुमानविषया बोधकः अनुमानप्रामाण्यं न्यायमत-

वोक्तः ईश्वरसिद्धिश्च क्षित्यादिकं सकर्तृकं कार्यत्वाद्धटव-
दित्यनुमानात् । आगमादपि तदभ्युपगतप्रकारादिति ।
उपमानं च नास्त्येवाप्तवाक्यग्रहस्य व्यवहारादिभिरेव
सिद्धेः ॥

**Colophon:**

इति षड्दर्शनीसिद्धान्तसंग्रहे वैशेषिकमतसिद्धान्त-
संग्रहः समाप्तः ।

॥ अथ मीमांसकमते भाट्टमतम् ॥

**Beginning:**

अथ मीमांसकमतं लिख्यते । तच्च द्विविधं भाट्टमतं प्रा-
भाकरमतं चेति । तत्र पूर्वं भाट्टमतं लिख्यते । कलियुगा-
दौ बौद्धादिभिः खिलीकृतं वेदान्तमार्गमालोक्य जगदु-
ज्जीवयितुं परमकारुणिकः कुमारस्वामिरूपेणावतीर्य बौद्धा-
न्निरस्य पुनः श्रुतिमार्गं प्रतिष्ठापयामासेति प्रसिद्धम् । तत्र
च प्रतिपाद्यो विषयस्तु धर्मः अधर्मश्च । धर्मस्य च साधनं
कर्म नित्यनैमित्तिककाम्यभेदात्त्रिविधम् ।

**End:**

एवं सुखदुःखादिवैचित्र्याद्भिन्नेषु जीवेषु परमात्माऽनु-
वर्तते । एवंभूतं परमात्मानं त्र्यैयंत्रकादिभिर्मन्त्रैः ध्यायन्
पूजयंश्च विरक्तो मुमुक्षुः विषयादृते परानन्दानुभूतिरूपं
मोक्षं प्रतिपद्यत इति सिद्धम् ॥

Colophon:

इति षड्दर्शनीसिद्धान्तसंग्रहे भाट्टमतसिद्धान्त-
संग्रहः समाप्तः ॥

Beginning:

अथ प्राभाकारमतं लिख्यते । पूर्वमीमांसायां द्वाद-
शलक्षण्या धर्मो विषयः ॥

End:

सच्चिदानन्दरूपं ब्रह्म निष्प्रपञ्चं निर्गुणं निष्क्रियं
जीवश्च तत्तत्स्वरूपः तस्याविद्यकं कर्तृत्वादिप्रपञ्चमि-
थ्यात्वमविद्यामूलकारणं सर्वस्य ज्ञानान्मुक्तिरित्यादि नि-
ष्प्रमाणमेव ' तस्मात्कर्मैव मोक्षसाधनमिति सिद्धम् ।

Colophon:

इति श्रीषड्दर्शनासिद्धान्तसंग्रहे प्राभाकरमतासिद्धान्त-
संग्रहः समाप्तः ।

॥ निरीश्वरसांख्यम् ॥

Beginning:

अथ सांख्यदर्शनीसिद्धान्तो लिख्यते । सांख्यशास्त्रं
द्विविधं सेश्वरं निरीश्वरं च । निरीश्वरं कापिलम् । सेश्वरं
पातञ्जलम् ।

End:

तस्मात्फलानुरागिभिः संसारेषु प्रवर्तका यागादयो
यथाविध्यनुष्ठेयाः । विरक्तैस्तु त्रिविधदुःखात्यन्तनिवृत्ति-
रूपमुक्तये तत्त्वज्ञानं संपादनीयमिति सिद्धम् ॥

**Colophon:**

इति श्रीमत्षड्दर्शनसिद्धान्तसंग्रहे सांख्यमतसिद्धान्त-
संग्रहः समाप्तः ॥

**Beginning:**

अथ पातञ्जलयोगशास्त्रं लिख्यते । अस्य शास्त्रस्य योगो विषयः । कैवल्यं फलम् । योगजिज्ञासुरधिकारी । योगश्च चित्तवृत्तिनिरोधः ।

**End:**

तथा च विरक्तस्य योगाभ्यासमाहिम्ना निरस्तालस्यादिसमस्तदोषस्य तत्वज्ञानात्सकलदुःखनिवृत्तिरूपमोक्षो भवतीति सिद्धम् ॥

**Colophon:**

इति षड्दर्शनीसिद्धान्तसंग्रहे पातञ्जलसिद्धान्त-
संग्रहः समाप्तः ।

**Beginning:**

अथ परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादमतं समस्तश्रुतीतिहासपुराणसम्मतं दूरीकृतसर्वतन्त्रासिद्धान्तं लिख्यते । लिलेखयिषितोत्तरमीमांसा चतुर्लक्षणी । तस्याश्शुद्धबुद्धमुक्तस्वभावं नित्यनिरंजननिर्विकारनिर्लेपनिष्प्रपञ्चं सच्चिदानन्दरूपं स्वप्रकाशं कूटस्थममलं नित्यमुक्तं सर्ववेदान्तपरमतात्पर्यविषयीभूतमात्मानमखण्डचैतन्यं विषयः ।

End:

चतुर्थाध्याये क्रममुक्तिजीवन्मुक्त्यादिनिरूपणं अर्चि-
रादिमार्गनिरूपणं चेति इत्थं सर्वेषां तन्त्राणां अपि वा-
त्स्यायनादीनां ब्रह्मण्येव समन्वयः इति साक्षात्परम्परया
वा ब्रह्मावगतावुपयोग इति वेदितव्यम् ।

Colophon:

इति वेदान्तमतं समाप्तम् ।

॥ व्याकरणम् ॥

Beginning:

शिलायामपि चैतन्यसृजे कौशिकहर्षिणे ।
कुलदेवाय गुरवेऽप्यस्तु धर्मभुवे नमः ॥

अथ व्याकरणशास्त्रं लिख्यते । व्याकरणशास्त्रस्य
शब्दा विषयाः । ते च शब्दा द्विविधाः वैदिका लौकि-
काश्च । वैदिका वेदेषु प्रयुक्ताः शब्दाः । वेदाश्च, ऋग्वेदो
यजुर्वेदः सामवेदोऽथर्ववेद इति चतुर्विधाः ॥

End:

सप्तमे तु प्रत्ययादेशविशेषप्रकृत्यादेशविशेषाश्च विधी-
यन्ते । अष्टमे तु पदद्वित्वयुष्मदस्मदादेशातिङन्तस्वरवि-
धेयनलोपमतुब्वत्वसंयोगान्तलोपादिपदकार्यविशेषनि-
ष्ठानत्वप्लुतरुत्वानुनासिकानुस्वारविसर्जनीयसत्वषत्वण -
त्वश्चुत्वष्टुत्वचर्त्वद्वित्वसवर्णलोपादीनि कार्याणि विवृताकारस्य
संवृताकारश्च विधीयन्ते ॥

**Colophon:**

इति व्याकरणमतसंग्रहस्संपूर्णः ॥

फणिग्रामणिवाग्गुम्फग्राणनाड्यदुक्तये ।
कलये शब्दकौमुद्याः कवये गुरवे नमः ॥

अपेक्षितपरित्यागेप्यनपेक्षितवर्णने ।
इदं सन्तो न निन्दन्तु नृणां धर्मो ननु भ्रमः ॥

इदं पुस्तकं पार्थिवनामसंवत्सरे उत्तरायणे ग्रीष्मऋतौ ज्येष्ठमासे कृष्ण-
पक्षे द्वितीयायां भौमवासरे रामाभट्टेन लिखितम् ।

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।
यादृशं पुस्तकं + न विद्यते ॥

Subject: Ṣaḍdarśanīsiddhāntasaṅgraha, a compendium of the 6 systems of Indian philosophy.

Remarks:—The Ms. is in good condition.

Chapters.

1. Nyāya.
2. Vaiśeṣikā.
3. Bhāṭṭa Pūrvamīmāmsā
4. Prābhākara ,,
5. Nirīśvara, Sāṅkhya (Kāpila) Sāṅkhya.
6. Seśvara Sāṅkhya (Pātañjala) ,,
7. Advaita (Śāṅkara)
8. Vedānta.

Though there are 2 chapters bearing these 2 different titles, they treat about one and the same system—Ad-

vaitavedānta. In the former, other Vidyāsthānas and systems are examined and compromised with the Advaita, while in the latter, the principles of Advaita are set forth.

9. **Vyākaraṇa.**

This last chapter is beyond doubt, the work of Rāmabhadra Dīkṣita as can be seen from the Maṅgalaśloka on Rāma, and the concluding verse, which pays respect to his father-in-law and author of Śabdakaumudī, Cokkanātha Makhin.

For further notes on the other 6 authors of this compilation vide introduction to this volume.

---

## ॥ षड्दर्शनीसिद्धान्तसंग्रहः ॥

## 7632. ṢAḌDARŚANĪSIDDHĀNTASAṄGRAHAḤ.

Burnell's Catalogue No. 9678. Page 96. Right column. Substance—Palm leaf. Size—18½ × 1½ inches. Leaves—51. Lines—7 to a Page. Script—Grantha. No. of Granthas—900. Author—Rāmabhadradīkṣita and others. Complete. Not printed.

Beginning end, colophon and subject—Same as No. 7631.

**Remarks:**—The Ms. is in a fairly good condition.

---

## ॥ षड्दर्शनीसिद्धान्तसंग्रहः ॥

## 7633. ṢAḌDARŚANĪSIDDHĀNTASAṄGRAHAḤ.

Burnell's Catalogue No. 10957. Page 96. Right column.

Substance—Palm leaf. Size—$14 \times 1\frac{1}{2}$ inches. Leaves—62. Lines—4 to a Page. Script—Telugu. No. of Granthas—900. Author—Rāmabhadradīkṣita and others. Complete. Not printed.

Beginning, end, colophon and subject—Same as No. 7631.

Remarks:—The Ms. is in a fairly good condition.

---

## ॥ बहुविधमतखण्डनम् ॥

## 7634. BAHUVIDHAMATAKHAṆḌANAM.

Burnell's Catalogue No. 11429 a. Page Left column. Substance—Palm leaf. Size—$16 \times 1\frac{1}{2}$ inches. Leaves— Lines—8 to a Page. Script—Grantha. No. of Granthas—5000. Author—? Complete. Not Printed.

Beginning:

मतखण्डनम् ॥

भो विद्वन् तव शिवतत्त्वमशेषदोषनिवारणहेतुभूतमकथ्य-
मासीत् । शिवस्य जगत्कारणमूर्तेः पञ्चभूतरूपाणि पञ्च-
लिङ्गानि सन्ति त्रिशूलडमरुग तेज उत्पन्नौ तद्रूपमेकलि-
ङ्गमेव लिङ्गाष्टकं भगवतोऽष्टमूर्तयः । लिङ्गद्वयं अन्तर्लिङ्ग-
बहिर्लिङ्गसंयोजनं कृत्वा चिदाचिदैक्यारूढबुद्धिवृत्तिः नि-
न्द्यानिन्द्यादि[illegible] रहितः सर्वं [illegible]मिति शिवाङ्कता-
रीत्वं [illegible] एव शिवः [illegible] [illegible]
[illegible] ॥

End:

मासे शुक्लपक्षे प्रभवसंवत्सरे भूपिण्डोपरि वायुद्वयौ परिवर्तमाने प्रवाहवायोश्चन्द्रबुधशुक्ररविकुजगुरुराहुकेतुशनैश्चरा निवेशिताः स्वस्वोपरिस्था कक्षस्थाश्चक्रान्तर्वर्तिनोऽपि चक्रस्था इव भान्ति तद्वशादेव प्रागुदयः पश्चादस्तमयश्च स्ववशा प्रागस्तमयः पश्चादुदयश्च तेषामूर्ध्वानुभवः कथमित्युक्ते कालचक्रस्थः प्रतिपद्यन्त सूत्राणि च कक्षानि तानि तानि किल प्रतिगृहं कक्षाग्रहणमाचरन्ति तद्वशात् घटादय स्वस्वकक्षानुप्राक्तनगत्या कुलालचक्रे विपरीतगतिः कीटा इव प्रतिदिनं पादोनगोक्षधृतिभूमितयोजनप्रमाणमार्गान्तरतां स्वस्वकक्षामासगतबृहल्लघुलिप्तानुभवो गतिरिति सम्यगुत्पद्यते सा सर्वेषां समापि भिन्नैव प्रतिफलति लिङ्गलिङ्गालयकृतप्रदक्षिणपुरुषगतिवच्चन्द्रशन्योर्योजनीयमुक्तञ्च सिद्धान्ते—

'मन्दादरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः ।
परिभ्रमन्त्यधोऽधस्तात्सिद्धविद्याधरा घना ॥' इति

'चक्रास्सर्वा अपि दिविपदां चक्रलिप्ताङ्किताश्ता
वृत्ते लघ्वो लघुनि महति स्यान्महत्यश्च लिप्ताः ।
तस्मादेते शशिजभृगुजादित्यभौमेज्यमन्दा
मन्दाक्रान्ता इव नभचराः भ्रान्ति यान्तः क्रमेण ॥' इति ।

ग्रहगतिरपि षोढा पूर्वपरा याम्यो....... ।

Colophon: Nil.

Subject: Bahuvidhamatakhaṇḍanam; The contents of this work as given in the side margin are as follows:—

| | | | | | |
|---|---|---|---|---|---|
| 1 | शैव पूर्वपक्षसिद्धान्तौ | | 18 | वैष्णवादिसिद्धान्तः | |
| 2 | मल्लारि ,, | ,, | 19 | वैष्णवक्रियाभक्तिसिद्धान्तः | |
| 3 | शैवसिद्धान्तः | | 20 | भागवत | पूर्वपक्षसिद्धान्तौ |
| 4 | दुर्गा पूर्वपक्षसिद्धान्तौ | | 21 | वीरवैष्णव ,, | ,, |
| 5 | कमला ,, | ,, | 22 | पाञ्चरात्रवैष्णव,, | ,, |
| 6 | वाणी ,, | ,, | 23 | शार्ङ्गपाणि ,, | ,, |
| 7 | भक्ति , | ,, | 24 | चार्वाक ,, | ,, |
| 8 | शक्ति ,, | ,, | 25 | बौद्ध ,, | ,, |
| 9 | सौर ,, | ,, | 26 | कापालिक ,, | ,, |
| 10 | चन्द्र ,, | ,, | 27 | द्वितीयकापालिक,, | ,, |
| 11 | भौम पूर्वपक्षसिद्धान्तौ | | 28 | चार्वाक ,, | ,, |
| 12 | सौम्य ,, | ,, | 29 | जैन ,, | ,, |
| 13 | गुरु ,, | ,, | 30 | सौगत ,, | ,, |
| 14 | भृगु ,, | ,, | 31 | क्षपणक ,, | ,, |
| 15 | शनि ,, | ,, | 32 | शार्ङ्गवैष्णव ,, | ,, |
| 16 | राहु ,, | ,, | 33 | वैखानस ,, | ,, |
| 17 | केतु ,, | ,, | 34 | पाञ्चरात्रवैष्णव ,, | ,, |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 35 | शेष पूर्वपक्ष | ,, | ,, | 42 | कापालिक | ,, | ,, |
| 36 | वराह | पूर्वपक्षसिद्धान्तौ | | 43 | शक्तिगणपति | ,, | ,, |
| 37 | मन्मथ | ,, | ,, | 44 | हरिद्रागणपति | ,, | ,, |
| 38 | विष्वक्सेन | पूर्वपक्षः | | 45 | स्वर्णगणपति | ,, | ,, |
| 39 | गरुड पूर्वपक्षः | | | 46 | सन्तानगणपति | ,, | ,, |
| 40 | क्षपण सिद्धान्तः | | | 47 | नवनीतगणपति | ,, | ,, |
| 41 | बौद्ध | पूर्वपक्षसिद्धान्तौ | | 48 | उच्छिष्टगणपति | ,, | ,, |

49 क्षपणकसिद्धान्तः

Remarks:—The Ms. is in good condition. The other work contained herein is:—

'खण्डिका—सभापद्यम्'

The author criticies all the other systems of thought and establishes the Advaita doctrine. The various systems that he criticises are given under Subject. Some topics are repeated.

---

## ॥ अद्वैतमकरन्दः (सटीकः) ॥

## 7635. ADVAITAMAKARANDAḤ (SAṬĪKAḤ).

Burnell's Catalogue No. 6451. Page 98. Left column. Substance—Paper. Size—10 × 4½ inches. Sheets—8. Lines—9 to a Page. Script—Devanāgarī. No. of Granthas—125. Author—Lakṣmīdhara. Complete. Printed.

Beginning:

ग्रन्थारम्भे मङ्गलाय गुरुदेवतानमस्कारं करोति ।

कटाक्षकिरणाचान्तनमन्मोहाब्धये नमः ।

अनन्तानन्दकृष्णाय जगन्मङ्गलमूर्तये ॥

तत्त्वमस्यहंब्रह्मास्मीत्युपनिषत्प्रतिपाद्यं प्रत्यक्ब्रह्मणो-
रैक्यं तर्केणोपपादयति—

॥ मू ॥ अहमस्मि सदा भामि कदाचिन्नाहमप्रियः ।
ब्रह्मैवाहमतः सिद्धः सच्चिदानन्दलक्षणम् ॥

अस्मिन् श्लोके इदमनुमानमुक्तम् । प्रत्यगात्मा धर्मी । ब्रह्मैवेति साध्यो धर्मः । ब्रह्मणा समानस्वभावत्वे सति उपाधिपरामर्शाधीनभेदप्रतिभासत्वात् ।

End:

॥ मू ॥ उपशान्तजगज्जीवशिष्याचार्येश्वरभ्रमम् ।
स्वतस्सिद्धमनाद्यन्तं परिपूर्णमहं महः ॥ २७ ॥

ग्रन्थं समाप्य तस्य सज्जनग्राह्यतामाशास्ते ।

लक्ष्मीधरकवेस्सूक्तिशारदाम्भोजसंभृतः ।
अद्वैतमकरन्दोऽयं विद्वद्भृङ्गैर्निपीयताम् ॥

Colophon:

इति श्री लक्ष्मीधरकृताद्वैतमकरन्दः सम्पूर्णः ।

Subject: Advaitamakaranda a short treatise in support of

Advaita with a very brief ṭīkā, perhaps of the author himself.

**Remarks:**— The Ms. is in a fairly good condition. On the title page is given—

हे पुस्तक + काशिदेशाहून + आणिलें असें ।

and a loose verse.

मोहातीतो विशुद्धो मुनिभिरभिहितो मोहसंक्रान्तमूर्तिः

साक्षी स्वान्ते तदुत्थे प्रतिफलितवपुर्गीयतेऽसौ प्रमाता ।

वृत्त्यारूढः प्रमाणं फलमिति धिषणावृत्तिसंव्याप्य चेत्यो(?)

पाधिर्मोहोत्थशब्दप्रमुखविषयगस्यात्प्रमेयः परात्मा ॥

After the colophon is given:—

सक्ता सदानन्दपदे निमग्नं मनो मनोभावमपाकरोति ।

गतागता या समपास्य सद्यः परा परातीतमुपैति तत्त्वम् ॥ १ ॥

After this some unintelligible yoga matter of 4 lines is written.

This short Advaitic prakaraṇa in 27 Anuṣṭub verses, proving logically the identity of the Jīvā and Brahma is by one Lakṣmīdhara, pupil of Anantānandakṛṣṇa. This author seems to have become a Sanyāsin after this work was composed and his name seems to have changed to Kṛṣṇendra as is made out by a Ms. of Advaitamakarandavyākhyā No. 7641.

This work has been printed in the Śrī Vāṇī Vilās Press, Srirangam with the commentary of Svayamprakāśayati. For further remarks see under No. 6930. (Vol. XII.)

---

## ॥ अद्वैतमकरन्दः (सटीकः) ॥

## 7636. ADVAITAMAKARANDAḤ (SAṬĪKAḤ).

P. A. Collection No. 128.

Substance—Paper. Size—8¾ × 4½ inches. Sheets—9 (6-14). Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—125. Author—Lakṣmīdhara. Complete. Printed.

Beginning, end, colophon and subject—Same as No. 7635.

Remarks:—The Ms. is in a good condition.

---

## ॥ अद्वैतमकरन्दव्याख्या—रसाभिव्यञ्जिका (समूला) ॥

## 7637. ADVAITAMAKARANDAVYĀKHYĀ—RASĀBHIVYAÑJIKĀ (SAMŪLĀ).

Burnell's Catalogue No. 9669. Page 93. Left column. Substance—Palm leaf. Size—17 × 1½ inches. Leaves—13. Lines—10 to a Page. Script—Grantha. No. of Granthas—500. Author—Svayamprakāśayati. Complete. Printed.

Beginning:

नित्यं निरन्तरानन्दं चिद्घनं ब्रह्म निर्भयम् ।
भुक्त्वा तर्कानुभूतिभ्यां अहमस्म्यद्वयं सदा ॥

अम्बागृहीतवामार्धं वन्दे चन्द्रकलाधरम् ।
लावण्यमधुराकारं कारुण्यरसवारिधिम् ॥

कैवल्यानन्दयोगीन्द्रपादकञ्जरजो रविः ।
राजते मे हृदाकाशे मोहध्वान्तनिवर्तकः ॥

शुद्धानन्दपदाम्भोजमकरन्दानिषेवणात् ।
निर्वाणरसमासाद्य हृष्टाः शिष्यालिपङ्क्तयः ॥

सच्चिदानन्दयोगीन्द्रा जयन्ति भुवि केचन ।
यत्कृपाबलतस्तीर्णो मया संसारवारिधिः ॥

इह खलु लक्ष्मीधरो नाम कश्चित्कवीन्द्रः * * किंचित्प्रकरणमद्वैतमकरन्दाख्यमारभमाणः * * मङ्गलं स्वयमनुष्ठाय शिष्यशिक्षार्थं ग्रन्थतस्स्वयं निबध्नाति ।

कटाक्ष + मूर्तये ॥

End:

यद्यप्यत्र प्रतिश्लोके बहु वक्तव्यमस्ति, तथापि मन्दबुद्धीनां व्युत्पादनार्थं प्रवृत्तेन मया ग्रन्थकाठिन्यभिया गौरवभयात् उपरतमिति ।

(अद्वैतमकरन्दस्य रसाभि)व्यञ्जिका कृता ।
स्वयम्प्रकाशयतिना पुरुषोत्तमशासनात् ॥

ब्रह्मानन्दरसास्वादमिच्छाद्भिः विबुधोत्तमैः ।

रसाभिव्यञ्जिका ह्येषा परिशील्या सदाऽदरात् ॥

* *

(इदं श्लोकद्वयं सच्चिदानन्दानां)।

....................................... ।

मन्दस्मितानन्दितभक्तजालं

सौन्दर्यसन्तर्पितवामभागम् ।

स्वानन्दसन्तृप्तममन्दहासं

साम्बं भजे चन्द्रकलावतंसम् ॥

Colophon:

इति श्री परमहंसपरिव्राजकाचार्य श्रीकैवल्यानन्दयोगीन्द्रपाद-कमलभृङ्गायमाणस्वयंप्रकाशाख्ययतिना विरचिता रसाभिव्यञ्जिकाख्या अद्वैतमकरन्दव्याख्या समाप्ता ॥

Subject: Advaitamakarandavyākhyā; Rasābhivyañjikā.

**Remarks** :—The Ms. is in a fairly good condition.

The author calls himself the desciple of many gurus chief of whom being Kaivalyānandayogīndra and Gopālayogīndra. This author is also the author of many other works chief among them being Haritatvamuktāvalī, Tatvasudhā, Vedāntasaṅgraha, Hastāmalakaślokavyākhyā and Ekaślokīvyākhyā. This commentary along with the text is published in the Srī Vāṇī Vilās Press, Srīrangam.

## ॥ अद्वैतमकरन्दव्याख्या—रसाभिव्यञ्जिका (समूला) ॥

## 7638. ADVAITAMAKARANDAVYĀKHYĀ—RASĀBHIVYAÑJIKĀ (SAMŪLĀ).

Burnell's Catalogue No. 9620. Page 93. Left column. Substance—Palm leaf. Size—19¾ × 1½ inches. Leaves—9. Lines—10 to a Page. Script—Telugu. No. of Granthas—500. Author—Svayamprakāśayati. Complete. Printed.

Beginning, end, colophon and subject—Same as No. 7637.

Remarks:—The Ms. is in good condition. There is a loose leaf at the end and one at the beginning, dealing with the same subject.

---

## ॥ अद्वैतमकरन्दव्याख्या—रसाभिव्यञ्जिका (समूला) ॥

## 7639. ADVAITAMAKARANDAVYĀKHYĀ—RASĀBHIVYAÑJIKĀ (SAMŪLĀ).

Burnell's Catalogue No. 9671. Page 93. Left column. Substance—Palm leaf. Size—14¾ × 1¼ inches. Leaves—20. Lines—6 to a Page. Script—Devanāgarī. No. of Granthas—500. Author—Svayamprakāśayati. Complete. Printed.

Beginning, end, colophon and subject—Same as No. 7637.

Remarks:—The Ms. is in a good condition.

---

## ॥ अद्वैतमकरन्दव्याख्या—रसाभिव्यञ्जिका (समूला) ॥

## 7640. ADVAITAMAKARANDAVYĀKHYĀ—RASĀBHIVYAÑJIKĀ (SAMŪLĀ).

P. A. Collection No. 124.

Substance—Paper. Size—$12\frac{1}{2} \times 5\frac{1}{4}$ inches. Sheets—25. Lines—8 to a Page. Script—Devanāgarī. No. of Granthas—600. Author—Svayamprakāśayati. Complete. Printed.

Beginning, end, colophon and subject—Same as No. 7637.

Remarks:—The Ms. is in a fairly good condition.

After the colophon is given:—

इदं पुस्तकं रङ्गस्वामिस्वहस्तालिखितम् ॥

---

## ॥ अद्वैतमकरन्दव्याख्या ॥

## 7641. ADVAITAMAKARANDAVYĀKHYĀ.

Burnell's Catalogue No. 9811 a. Page 94. Right column.

Substance—Palm leaf. Size—$18\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaf—1. Lines—15 to a Page. Script—Telugu. No. of Granthas—120. Author—Svayamprakāśayati. Incomplete. Fragment only. Printed.

Beginning:

ओं ॥ नित्यं निरन्तरानन्दं चिद्घनं ब्रह्म निर्भयम् ।
स्मृत्वा तर्कानुभूतिभ्यामहमस्म्यद्वयं सदा ॥

अम्बागृहीतवामार्धं वन्दे चन्द्रकलाधरम् ।
लावण्यमधुराकारं कारुण्यरसवारिधिम् ॥

बोधज्ञानेन्द्रयोगीन्द्रपदकञ्जरजो रविः ।
राजते मे हृदाकाशे मोहध्वान्तनिवर्तकः ॥

गीर्वाणेन्द्रपदाम्भोजद्वन्द्वं सेवे यदुद्भवम् ।
निर्वाणरसमासाद्य हृष्टा शिष्टालिपङ्क्तयः ॥

नारायणेन्द्रयोगीन्द्रा जायन्ते भुवि केचन ।
यत्कृपाबलतस्तीर्णो मया संसारवारिधिः ॥

इह खलु कृष्णेन्द्रो नाम कश्चिद्यतीन्द्रो +
कश्चित्प्रकरणमद्वैतमकरन्दाख्यं आरभमाणः * *
मङ्गलं * ग्रन्थतो निबध्नाति ।

* *

End:

शास्त्रत इति । अतस्त्रिविधनाशाभावात् नित्यबदा-
स्मेति तस्य ब्रह्मणाभेदस्सम्यक्....दत इति भावः । हेतु-
संयोगादात्मनो न नाश इति द्वितीयपक्षं प्रपञ्चयति । ...
.............।

Colophon: Nil.

Subject: Advaitamakarandavyākhyā.

Remarks:—The Ms. is in good condition. The other work contained herein is Tattvaprakriyā. The names of the gurus differ in this from those given in No. 7637.

---

## ॥ जीवब्रह्माभेदः ॥

## 7642. JĪVABRAHMĀBHEDAḤ.

Burnell's Catalogue No. 9884 e.

**Substance**— Palm leaf. Size—15 × 1¼ inches. **Leaves**—14 (41–54) Lines—5 to a Page. Script—Telugu. No. of Granthas—500. Author—?. Incomplete. Not printed.

Beginning:

...तस्मात्सिद्धं नित्यादिवाक्यानां लक्षणया अखण्ड-ब्रह्मप्रतिपादकत्वमिति । एवं जीवब्रह्मविषयकस्य अवान्त-रवाक्यस्य अखण्डार्थत्वे सिद्धे तत्सिद्धपदार्था भेदबोधकं तत्त्वमसीत्यादिमहावाक्यमपि अखण्डार्थ-कं ।

End:

...अव्याप्यवृत्तेः जात्ययोगाच्च । न च फलबलेन तत्र संसारस्मरणं वा इन्द्रियसन्निकर्षः कल्प्यतामिति वाच्यम् । तदंशे साक्षात्कारो जात्यनुभवाभावेन तत्र फलन्त्विह सि-द्धतया तत्फलकल्पने.... ।

Subject: Jīvabrahmābheda dealing with the difference

between Jīvātman and Paramātman.

Remarks: —The Ms. is in a fairly good condition. For the other works contained herein see No. 7120.

---

## ॥ परमतभंजनम् ॥

## 7643. PARAMATABHAÑJANAM.

Burnell's Catalogue No. 9869. Page 95. Left column. Substance—Palm leaf. Size—17½ × 1½ inches. Leaves—83. Lines—8 to a Page. Script—Telugu. No. of Granthas—8000. Author—? Incomplete. Not printed.

Beginning:

........ननु तत्पदादिवाक्येन जीवपरयोश्चैतन्याकारेण भेदः प्रतिपाद्यत इति द्वितीयकल्पोऽस्तीति चेन्न । चैतन्यस्य जीवपरयोर्धर्मत्वेन तेनापि रूपेण तद्भेदः संभवति । तस्य तत्स्वरूपत्वेऽपि तत्कल्पे........सर्वज्ञत्वाकिञ्चिज्ज्ञत्वयोः समावेशोऽनुपपन्नः । न च तदाश्रयचैतन्यस्य भिन्नाभिन्नत्वाददोष इति वाच्यम् । किं तयोश्चैतन्याकारेणैव भेदं वक्तुमुद्यतोऽसि तथा सति चैतन्याकारेण....स्तेनैव भेद इति समंज....पद्येत । ननु चैतन्याकारेण भेदः किंचिज्ज्ञत्वसर्वज्ञत्वाद्याकारेण भेद इति चेत् किं भेदाकारप्रयोजकधर्मश्चैतन्यमात्रे उत स्वावच्छिन्ने । नान्त्यः । स्ववृत्तिविरोधात् । न प्रथमः । निरंशचैतन्यस्यैकत्वविरुद्धधर्मस...श्रानुपपत्तेरुक्तत्वात् चैतन्यस्य तदभे-

द्वोधः समुदियात्। अस्तु वा यथाकथञ्चि...येन केनापि प्रकारेणविरोधः परिहर्तुं शक्यत इत्येव ता....मूलव्युच्छेद-प्रसङ्गात् । गङ्गायां घोष इत्यत्रापि गङ्गापदस्य प्रयोगभेदे तीरेपि शक्तिः । सम्बन्धा वा सामीप्यमिति मुख्योऽर्थः इति लक्षणोच्छेदप्रसङ्गात् । सोमेन यजेतेत्यत्रापि सोमवतेति कल्पनया मत्वर्थलक्षणा......तस्माद्यथाशक्ति भेदादि-दोषवशाल्लोके वेदे च लक्षणा कल्प्यते । एवमत्राप्यैकदेवानु द्रष्टव्यमिति.......योश्च तत्त्वमादिवाक्ये विवक्षितान्वय-सिद्ध्यर्थमे......लक्षणा वाच्येति ।

End:

"तमःप्रधानं क्षेत्राणां चित्प्रधानं चिदात्मनाम् ।
परः करणतामेति वासनाज्ञानकर्मभिः ॥" इति

घटौ सन् जडो घनः क्षरति विच्च तस्याविद्याभयात्मे-तायाः प्रतीतिर्न करणजातीयनियमभङ्गप्रसङ्गः । अस्तु वा-न्यत्र यथातथा विवर्तवा...तु न कश्चिदप्युक्ता...ष इति ...तनूपादान्....स्यान्यत्र कुष्टत्वादपि नात्र विवरितव्यं । यथा स्वप्नसर्गस्य कारणान्तरानिरूपणादात्मैव तदाकारेण विवर्तत इति वक्तव्यं । यथा वा ऊर्णनाभिस्तन्तुं प्रत्युपा-दान....... ।

**Subject:** Paramatabhañjanam a treatise refuting the theories of other systems and establishing the advaita.

Contents of this Ms. as given in the side margins of the

first nine leaves is as follows:—

1 ...१....निरासः

2 तत्त्वमसीत्यत्र....वृत्तिनिरासः

3 लक्षणागौण्योर्लक्षणभेदः

4 आत्मनो नित्यशुद्धादिरूपत्वे प्रमाणम्

5 सत्यं ज्ञानमिति वाक्य........

6 ...दिनो शबलव्यु....

7 विपरीतभागत्यागलक्षणानिरासः

8 सत्यादिपदानां पर्यायत्वनिरासः

9 सत्यादिपदानां परस्पर....ग निरासः

10 सत्यादिपदानामन्यतरवैयर्थ्यनिरासः

11 वि...येस्यात्मरूपनिरासः

12 निरवयवसंयोगनिरासः

13 तत्त्वमसीति वाक्यस्य...निरासः

14 सत्यादिपदानां केवलात्मनि व्युत्पत्तिनिरासः

15 ........दूषणं

16 आत्म ...निरासः

Remarks:—The Ms. is in good condition.

## ॥ अद्वैतम् ॥

## ADVAITAM.

### ४. इतराद्वैतप्रकरणानि तद्व्याख्यानानि ॥

### IV. Minor works of other authors and the Commentaries thereon.

॥ अष्टावक्रीयम् ॥

## 7644. AṢṬĀVAKRĪYAM.

Burnell's Catalogue No. 6486. Page 94. Left column.

Substance—Paper. Size—8¾ × 4 inches. Sheets—17. Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—240. Author—Aṣṭāvakra. Incomplete. Printed.

Beginning:

……………………प्रायोसि सर्वदा ।
अयमेव हि ते बन्धो द्रष्टारं पश्यसीतरम् ॥ ७ ॥

अहं कर्तेत्यहंमानमहाकृष्णाहिदंशितः ।
नाहं कर्तेति विश्वासामृतं पीत्वा सुखी भव ॥ ८ ॥

एको विशुद्धबोधोऽहमिति निश्चयवह्निना ।
प्रज्वाल्याज्ञानगहनं वीतशोकः सुखी भव ॥ ९ ॥

यत्र विश्वमिदं भाति कल्पितं रज्जुसर्पवत् ।
आनन्दः परमानन्दः स बोधस्त्वं सुखी भव ॥ १० ॥

मुक्ताभिमानी मुक्तो हि बद्धो बद्धाभिमान्यपि ।
किंवदन्तीह सत्येयं या मतिस्सा गतिर्भवेत् ॥ ११ ॥

आत्मा साक्षी विभुः पूर्ण एको मुक्तः चिदक्रियः ।
असंगो निस्पृहः शान्तो भ्रमात्संसारवानिव ॥ १२ ॥

End:

क्व प्रमाता प्रमाणं वा क्व प्रमेयं क्व च प्रमाः ।
क्व किंचित्क्व न किंचिद्वा सर्वदा विमलस्य मे ॥ ८ ॥

क्व विक्षेपः क्व चैकाग्र्यं क्व निर्बोधः क्व मूढता ।
क्व हर्षः क्व विषादो वा सर्वदा निष्क्रियस्य मे ॥ ९ ॥

क्व चैष व्यवहारो वा क्व च सा परमार्थता ।
क्व सुखं क्व च वा दुःखं निर्विमर्शस्य मे सदा ॥ १० ॥

* *

क्वोपदेशः क्व वा शास्त्रं क्व शिष्यः क्व च वा गुरुः ।
क्व चास्ति पुरुषार्थो वा निरुपाधेश्शिवस्य मे ॥ १३ ॥

क्व चास्ति क्व च वा नास्ति क्वास्ति चैकं क्व च द्वयम् ।
बहुनाऽत्र किमुक्तेन किञ्चिन्नोत्तिष्ठते मम ॥ १४ ॥

Colophon:

इति अवधूतानुभूतिः ।

Subject: Aṣṭāvakrīyam.

The matter is dealt with in the following topics:—

1 उपदेशषोडशकम्

2 आत्मानुभवोल्लासाष्टाविंशतिकम्

3 आक्षेपद्वारोपदेशचतुर्दशकम्

4 उल्लासषट्कम्

5 लयचतुष्कम्

6 शिष्योक्तोत्तरोपदेशचतुष्कम्

7 अनुभवपञ्चकम्

8 बन्धमोक्षचतुष्कम्

9 निर्वेदाष्टकम्

10 परमाष्टकम्

11 ज्ञानाष्टकम्

12 एवमेवाष्टकम्

13 यथासुखसप्तकम्

14 शान्तिचतुष्कम्

15 तत्त्वोपदेशविंशतिकम्

16 विशेषोपदेशैकादशकम्

17 तत्त्वस्वरूपविंशकम्

18 शमशतकम्

19 आत्मविश्रान्त्यष्टकम्

20 अवधूतानुभूतिः

Remarks:—The Ms. is in a decaying condition. There is a transcript copy of this Ms. in the library vide T. V. No. 459.

This dialogue between Aṣṭāvakra and Janaka, which is also called as Aṣṭāvakragītā has been published in 'the Gītāsaṅgraha,' of the Aṣṭekar & Co. Poona. In the printed text there is a 21st chapter, recounting the names of and the number of verses in each chapter. This work has also appeared in 1930 Prabuddhabhārata with an English translation. The Ms. is dated Samvat 1708 or A. D. 1651.

## AṢṬĀVAKRĪYAM.

| Descriptive No. | Collection No. | | Substance | Size inches. | No. of Sheets or leaves. | No. of Lines per Page or sheet. | Script. | Complete or otherwise. |
|---|---|---|---|---|---|---|---|---|
| 7645 | B. L. | 6457 | Paper. | $8 \times 4\frac{1}{4}$ | 25 | 9 | Devanāgarī. | Complete. |
| 7646 | P. A. | 89 | ,, | $8\frac{1}{4} \times 4$ | 6 | 5 | ,, | Incomplete. |
| 7647 Not noticed by Burnell. | | | | | | | | |
| | Ms. No. | 14613 | ,, | $7\frac{1}{2} \times 4\frac{1}{4}$ | 43 | 8 or 9 | ,, | ,, |
| 7648 | P. A. | 89 h | ,, | $8\frac{1}{4} \times 4$ | 1 (2nd) | 4 | ,, | ,, |
| 7649 | B. L. | 6485 | ,, | $8\frac{1}{2} \times 4\frac{1}{2}$ | 2 | 8 | ,, | ,, |
| 7650 | ,, | 6348 | ,, | $8 \times 4\frac{7}{8}$ | 2 | 8 | ,, | ,, |
| 7651 | ,, | 6351 | ,, | $6\frac{1}{2} \times 4$ | 3 | 8 | ,, | ,, |

## DETAILED REMARKS

on the

## AṢṬĀVAKRĪYA MSS.

## IN THE ABOVE TABLE.

7647 On the title page is given—

'तुलजामहाराजभोसलस्य पुस्तकम् ।'

---

॥ पञ्चीकरणम्

## 7652. PAÑCĪKARAṆAM.

S. K. Collection No. 113.

Substance—Paper. Size—$7\frac{1}{2} \times 4$ inches. Sheets—7. Lines—14 to a Page. Script—Devanāgarī. No. of Granthas—225. Author—?. Complete. Not printed.

**Beginning:**

श्रीगणेशाय नमः ॥

पंचीकरणम् ॥ ओं नमो ब्रह्मादिभ्यः । इति । ओम् ॥

आनन्दमानन्दकरं प्रसन्नं

ज्ञानस्वरूपं निजबोधयुक्तम् ।

योगीन्द्रवन्द्यं भवरोगवैद्यं

श्रीमद्गुरुं नित्यमहं नमामि ॥

ब्रह्मविद्या मया लब्धा ब्रह्मणेव सरस्वती ।

यस्य तत्त्वोपदेशेन तस्मै श्रीगुरवे नमः ॥ २ ॥

आत्मानात्मविवेकेन पुंसः संसारनिह्नुतिः ।
तद्विना जन्मकोट्यापि बन्धच्छेदो न सिद्ध्यति ॥ ३ ॥
स्थूलसूक्ष्मादिदेहानामात्मन्यारोप एव च ।
अपवादस्ततोऽप्येषां सम्यगत्र प्रदर्शितः ॥ ४ ॥

End:

ईशेन मायाबिम्बेन शासितं सकलं जगत् ।
अहो वन्ध्याकुमारेण गन्धर्वनगरं यथा ॥

एवंभूतः प्रपञ्चः सर्वमनात्मेति सम्यग्विचार्य सच्चिदानन्दस्वरूपोऽहमिति यो जानाति स एवंभूतजननमरणपरम्परारूपसंसारान्मुक्तो भवति । "तरति शोकमात्मवित्", "ब्रह्मविद्ब्रह्मैव भवति" ॥

ओं नमो ब्रह्मादिभ्यः ॥

Colophon:

श्रीकागलकर शेषभट्टात्मजबाळाख्येनालेखीदं पुस्तकम् ।

Subject: Pañcīkaraṇam.

Remarks:—The Ms. is in good condition.

On the title page is given:—

शेषभट्टात्मजबाळाह्वयस्य ।

The owner and scribe is the same person.

It has with it an illustration of Pañcīkaraṇa bearing the name Pañcīkaraṇapaṭa.

## ॥ पञ्चीकरणम् ॥

## 7653. PAÑCĪKARAṆAM.

T. S. Collection No. 83.

Substance—Paper. Size—12×6 inches. Sheets—9. Lines—12 to a Page. Script—Devanāgarī. No. of Granthas—225. Author—?. Complete. Not printed.

Beginning:

श्री रामः कर्ता । श्री गणेशाय नमः ।

श्रीगुरुभ्यो नमः । ओम् ब्रह्मविद्भ्यो नमः ॥

End, colophon and subject—Same as No. 7652.

Remarks:—The Ms. is in very good condition.

---

## ॥ पञ्चीकरणम् ॥

## 7654. PAÑCĪKARAṆAM.

T. S. Collection No. 123.

Substance—Paper. Size—8¼×5½ inches. Sheets—18. Lines—7-8 to a Page. Script—Devanāgarī. No. of Granthas—300. Author—? Complete. Not printed.

This Ms. explains the theme of Pañcīkaraṇa in tabular forms with Mahraṭī explanations.

Remarks:—The Ms. is in good condition.

---

## ॥ परब्रह्मनिरूपणम् (प्रपञ्चामृतसारः) ॥

## 7655. PARABRAHMANIRŪPAṆAM (PRAPAÑCĀMṚTASĀRAḤ).

Burnell's Catalogue No. 1419. Page 141. Right column. Substance—Paper. Size—16×7 inches. Sheets—9. Lines—8-9 to a Page. Script—Devanāgari. No. of Granthas—220. Author—Ekojirāja. Incomplete. Not printed.

Beginning:

श्रीगणेशाय नमः ॥

श्रीमच्छम्भुं महादेवं वासुदेवसुतं विभुम् ।
नमस्कृत्य शिवां देवीं महालक्ष्मीं सरस्वतीम् ॥
सुब्रह्मण्यं गणेशं च नारदं मुनिपुंगवम् ।
प्रपञ्चामृतसाराख्यं पुराणं समुदीरयेत् ॥ २ ॥
एकस्मिन् समये कृष्णं नारदः प्रेमसंयुतः ।
प्रश्नं चकार विमलं सर्ववेदान्तसम्मतम् ॥ ३ ॥
स्वामिन् त्वदीयदयया श्रुतं सर्वं परं तु तत् ।
परब्रह्मस्वरूपं हि न श्रुतं परमेश्वर ॥ ४ ॥

End:

सर्वस्य कारणं सर्वव्यापकं ब्रह्म यच्छिवे ।
सदाचारव्रतः सम्यक् भक्तिसंयुक्तचेतसः ॥ ५१ ॥

एवं वेदान्तसिद्धान्तग्रन्थार्थज्ञानशालिनः ।

एकस्मिन्नेव तद्व्यक्तं प्रणवे परिदृश्यते ॥

भक्त्या तस्योपासनया प्रणवस्यैव धर्मितः ।

ब्रह्मप्राप्तिर्भवेच्छीघ्रं नात्र कार्या विचारणा ॥

इति ते कथितं देवि.... ।

Colophon: Nil.

Subject: Parabrahmanirūpaṇa, a chapter in Prapañcāmṛtasāra.

Remarks:—The Ms. is in good condition. Dr. Burnell says, "(1413 to 1491) These are fragments of an intended Encyclopaedia, something like the Abhilaṣitārthacintāmaṇi. Some chapters on Nīti seem alone to have been finished; some of the fragments relate to Pūjā etc."

This author was the son of Tukkoji I Mahārāja of Tanjore and Kumārāmba and ruled the kingdom of Tanjore for one year between 1735-1736. He is otherwise known as Bāvā Sahib. A work by name Prapañcāmṛtasāra both in Marāṭhi and Sanskṛt is attributed to him. The work is a compenduim of many small chapters dealing with various topics. One of the colophons to one of the many Manuscripts of this work given below contains the name of one Mahādeva as the author.

"श्रीमद्राजाधिराजतुळजमहाराजतनूजराजकुमाराम्बाप्रियबालसोमा-
स्कन्दभक्तएकराजसमुतमहादेवविरचितप्रपञ्चामृतसारराज-
रञ्जनपुराणे तुळजाराजगुणवर्णनं नाम ...अध्यायः ॥"

The chapters or portions dealing with Philosophical subjects are given here.

---

## ॥ परब्रह्मनिरूपणम् (प्रपञ्चामृतसारः) ॥

## 7656. PARABRAHMANIRŪPAṆAM (PRAPAÑCĀMṚTASĀRAḤ).

Burnell's Catalogue No. 1448. Page 141. Right column. Substance—Paper. Size—16 × 7 inches. Sheets—5. Lines—12 to a Page. Script—Devanāgarī. No. of Granthas—160. Author—Ekojirājā. Incomplete. Not printed.

Beginning and subject—Same as No. 7655.

End :

> सिद्धान्तं सर्वशास्त्राणां मुक्तेः साधनमुत्तमम् ।
> परब्रह्मज्ञानदीपं भवान्यै गदितं शिवम् ॥
>
> यः शृणोति सदा भक्त्या तस्य ज्ञानं भवेद्ध्रुवम् ।
> संसारार्णवसम्तारसुसाधनमबाधितम् ॥

Colophon : Nil.

Remarks :—The Ms. is in good condition. For full particulars vide No. 7655.

---

## ॥ परब्रह्मनिरूपणम् (प्रपञ्चामृतसारः) ॥

## 7657. PARABRAHMANIRŪPAṆAM (PRAPAÑCĀMṚTASĀRAḤ).

Burnell's Catalogue No. 1488. Page 141. Right column. Substance—Paper. Size—16×7 inches. Sheets—7. Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—125. Author—Ekojirajā. Incomplete. Not printed.

Beginning—Same as No 7655.

End :

ब्राह्मणाय सते शुद्धगृहस्थाश्रमवासिने ।
सुगुणाय सुवृत्ताय सदा शान्तिपराय च ॥
अध्यायं कथयेदेतं शुभं प्रणवपूर्वकम् ।
विष्णुभक्तेषु वाचापि तथा शैवेषु ये जनाः ॥
मन्वते ये .................. ।

Colophon : Nil.

Subject : Parabrahmanirūpaṇa a portion of Prapañcasārāmṛta.

Remarks :—The Ms. is in a fairly good condition. It ends abruptly. For full details see remarks under No. 7655.

---

## ॥ परब्रह्मतत्त्वनिरूपणम् (प्रपञ्चामृतसारः) ॥

## 7658. PARABRAHMATATTVANIRŪPAṆAM (PRAPAÑCĀMṚTASĀRAḤ).

Burnell's Catalogue No. 1420. Page 141. Right column.

Substance—Paper. Size—16×7 inches. Sheets—8. (10-12). Lines—10 to a Page. Script—Devanāgarī. No. of Granthas—60. Author—Ekojirājā. Incomplete. Not printed.

Beginning:

इति ते कथितं देवि ब्रह्मणस्तत्वमुत्तमम् ।
एवं स्पष्टतया सर्वं क्वापि न प्रतिपादितम् ।
अष्टादशपुराणेषु श्रुतिस्मृत्यागमेषु च ॥
मया त्वदीयभक्त्यैव रहस्यं सम्प्रकाशितम् ।
इत्येवं कथितं देव्यै दुर्ज्ञेयं तत्वमुत्तमम् ॥ २ ॥
देवेन परमेशेन श्रीमता चन्द्रमौलिना ।
मुने त्वमपि जानीहि सावधानेन चेतसा ॥ ३ ॥
एतज्ज्ञानात्तव भवेच्चित्तमानन्दनिर्भरम् ।
रहस्यमेतत्परमं कथितं तव नारद ॥ ४ ॥
विरक्तो यस्सदा शान्तो जितकामारिवर्गकः ।
शिवविष्णोरभेदन्तु सर्वदा मनुते दृढम् ॥ ५ ॥

End :

श्रुत्वैवं भगवद्वाक्यं नारदो मुनिसत्तमः ।
कृष्णं तुष्टाव बहुभिर्वाक्यैः श्रुतिशिरोगतैः ॥ ५७ ॥
पार्वतीपरमेशानसंवादश्रवणेन च ।
त्वं धन्योऽसि महाबाहो पूज्योऽसि जगतामपि ॥

अहं त्वदुपदेशेन धन्योऽस्मि यदुनन्दन ।
इत्युक्त्वा नारदः श्रीमान् भगवद्भक्तिसंयुतः ॥ ५९ ॥
अभवत्परमानन्दपरिपूरितमानसः ॥

Colophon:

श्रीमद्राजाधिराजमहादेवभक्तहरिहराभेदज्ञानसम्पन्नपरब्रह्मोपासकश्रीमत्तुलजमहाराजतनूजैकमहाराजविरचिते प्रपञ्चसारराजरञ्जनपुराणे त्रिपुरसुन्दरीसंवादरूपपरब्रह्मतत्त्वनिरूपणाध्यायः सम्पूर्णोऽयमाचन्द्रतारकं विजयताम् ॥ जयतु ॥

Subject: Parabrahmatattvanirūpaṇa a portion of Prapañcasārāmṛta or Prapañcāmṛtasāra of Ekojirāja of Tanjore.

Remarks:—The Ms. is in a fairly good condion. For detailed remarks see under No. 7655. The colophon of this Ms. confirms that the author was the desciple of one Mahādeva.

## ॥ रामानुजमतखण्डनम् (प्रपञ्चामृतसारः) ॥

## 7659. RĀMĀNUJAMATAKHAṆḌANAM (PRAPAÑCĀMṚTASĀRAḤ).

Burnell's Catalogue No. 1433. Page 141. Right column. Substance—Paper. Size—16×7 inches. Sheets—2. Lines—16 to a Page. Script—Devanāgarī. No. of Granthas—55. Author—Ekojirāja. Complete. Not printed.

Beginning:

श्री गणेशाय नमः ॥

सर्वज्ञं शंकरं देवं भवानीप्राणनायकम् ।
एकराजस्तुतं वन्दे तुळजेन्द्रसुखप्रदम् ॥ १ ॥

यस्यास्स्मृत्या सतां सद्यो वाग्विभूतिर्विजृम्भते ।
तां नमामि महादेवीं वाणीं वाचामधीश्वरीम् ॥ २ ॥

नत्वा श्रीगुरुपादाब्जं श्रीमदेकेन्द्रभूपतिः ।
रामानुजमताचारान् कांश्चिद्ब्रूते नृणां मुदे ॥ ३ ॥

साधूनां विदुषां सद्यःप्रीतिसंवृद्धिकारकः ।
अध्यायोऽयं सदा श्राव्यः शिवभक्तैर्विशेषतः ॥ ४ ॥

कदाचित्कुतुकाविष्टो नारदो मुनिसत्तमः ।
द्वारकायां समासीनं कृष्णं यदुकुलोद्भवम् ॥ ५ ॥

पप्रच्छ सकलज्ञोऽपि सर्वलोकहितेच्छया ।
स्वामिन् सर्वजगन्नाथ सर्वधर्मप्रवर्तक ॥ ६ ॥

त्वत्तः श्रुता मया भूरिमतभेदाः सुचेतसा ।
रामानुजमतं कीदृक् किमाचारास्तदाश्रयाः ॥ ७ ॥

End:

पुण्ड्राणि धारयन्त्यङ्गे न जपन्ति कदाचन ।
वस्त्रक्षालनमाद्यं तु द्वितीयं पुण्ड्रधारणम् ।
तृतीयं तु शिवद्रोहो नान्यत्कर्मास्ति शृंगिणाम् ॥
एतत्पापमतश्रुत्या यत्ते पापं भविष्यति ।
पञ्चाक्षरीजपात्सद्यः तन्नश्यति न चान्यथा ॥

एतच्छ्रुत्वा तु सन्तुष्टो नारदो देवतापसः ।
विस्मयाविष्टहृदयो ययौ पञ्चाक्षरीं जपन् ॥

**Colophon:**

प्रपञ्चामृतसारे राजरञ्जनपुराणे श्रीमद्राजाधिराजतुलजराजसूनु-
एकराजविरचितं रामानुजमतखण्डनं सम्पूर्णम् ॥

Subject: Rāmānujamatakhaṇḍana, This work particularly deals with the peculiarity of the creed of the followers of Rāmānujacārya rather, in a contemptuous tone.

Remarks:—The Ms. is in a fairly good condition. For further remarks see under No. 7655. In the margin is given

'रामानुजमतखण्डन'

---

॥ मध्वमतकथनम् (प्रपञ्चामृतसारः) ॥

## 7660. MADHVAMATAKATHANAM (PRAPAÑCĀMṚTASĀRAḤ).

Burnell's Catalogue No. 1486. Page 141. Right column. Substance—Paper. Size—16 × 7 inches. Leaves—2. Lines—11 to a Page. Script—Devanāgarī. No. of Granthas—10. Author—Ekojirājā. Complete. Not Printed.

Beginning

श्री गणेशाय नमः ॥

एकस्मिन् दिवसे कृष्णं द्वारकामध्यवासिनम् ।
नारदः परिपप्रच्छ भगवन्तं यदूद्वहम् ॥ १ ॥

स्वामिन् मतानि लोकेऽस्मिन् षट् सन्तीति मया श्रुतम् ।
तेषु सर्वेषु श्रेष्ठं किं पूतं वा किं दयानिधे ॥ २ ॥

तेषां तेषां तु सिद्धान्तः कीदृङ्मोक्षोऽस्ति वा कथम् ।
विस्तरेण प्रकथय मतानां तत्त्वनिश्चयम् ॥ ३ ॥

त्वं सर्ववित्सर्वमता(न्) जानासि निखिलं यतः ।
इत्युक्तो नारदेनाथ देवकीतनयो हरिः ॥ ४ ॥

विस्तारं कथयांचक्रे मतानां शास्त्रवर्तिनाम् ।
मध्वाचार्य इति ख्यातो ह्यभूत्कश्चन मस्करी ॥ ५ ॥

End:

विधवानां तु नारीणां व्यभिचारिनृणामपि ।
इदं मतं बहुमतं नान्येषां पुण्यकर्मणाम् ॥

प्रायेणास्मिन्मते लोकाः स्थूलांगाः बलशालिनः ।
लज्जां विहाय निःशङ्कं वदन्तोऽज्ञानिनः परम् ॥

यावन्मतप्रवेशस्तु भवेत्तावद्धि सौम्यता ।
प्रवेशे लज्जया हीना व्यभिचारं वितन्वते ॥ २७ ॥

व्यभिचारस्य शुद्ध्यर्थं गृहीत्वाज्ञां गुरोरपि ॥
घृतशौचविधानेन कुर्वन्ति मलनाशनम् ॥

Colophon : Nil.

Subject : Madhvamatakhaṇḍana. This particular portion deals with the creed of the followers of Madhvācārya in a contemptuous tone.

Remarks:—The Ms. is in a fairly good condition. For full particulars see remarks under No. 7655.

---

॥ ज्ञानांकुशम् (सव्याख्यम्) ॥

## 7661. JÑĀNĀṄKUŚAM (SAVYĀKHYAM).

Burnell's Catalogue No. 9748 b.

Substance—Palm leaf. Size—$15\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—6. Lines—8-9 to a Page. Script—Grantha. No. of Granthas—200. Author—? Complete. Not Printed.

Beginning :

अथ मुमुक्षूणामखिलपुरुषार्थसाधकानां नित्यशुद्धबुद्धमुक्ताद्वयानन्दज्ञानस्य चित्तसमाधानमूलत्वात् तदर्थं ज्ञानाङ्कुशाख्यं प्रकरणं करोति ।

॥ मू ॥ महात्मनां सत्त्ववशात्स्वबुद्धिभिः

दृढा परिज्ञानसमाहितात्मनाम् ।

परापवादेष्वपि मादृशात्मनः

समानयेत्कल्पनया नयाङ्कुशम् ॥

(महात्मनामिति । परिज्ञानसमाहितात्मनां) परापवा-

देषु सत्सु सत्त्ववशात् महात्मनां व्यवस्थितिः दृढा भवति ।
माहगात्मनस्तु परापन्नादेषु सत्सु अनया कल्पनया अङ्कु-
शं समानयेदित्यन्वयः ।

End :

॥ मू ॥ सर्वतः परिधावन्तं मनोमत्तमतङ्गजम् ।
ज्ञानाङ्कुशवशं नीत्वा पुनः पन्थानमानयेत् ॥ २५ ॥

॥ व्या ॥ * *

॥ मू ॥ न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ।
अङ्कुशेन विना मत्तो यथा दुष्टो मतङ्गजः ॥ २६ ॥

विषयान्प्रति भोः पुत्र सर्वानेव हि सर्वदा ।
अनास्था परमा यैषा सा युक्तिर्मनसो जये ॥ २७

* * *

आत्ममये महति पटे
जगति जगच्चित्रमात्मना लिखति ।
स्वयमेव केवलमणौ(?)
पश्यन्प्रमुदं प्रयाति परमात्मा ॥ २९ ॥

हरिः ओम् ।

त्वन्मायया कमलनाभविमोहितश्चेत्
विद्यावतो जडमतेरपि को विशेषः ।

गाढान्धकारकवलीकृतलोचनानां
उन्मीलितेन किमु वा च निमीलितेन ॥ २० ॥

तत्त्वे श्रुत्युपपत्तिभिर्व्यपगते द्वैतस्य तद्ग्राहिणः
प्रामाण्यं व्यवहारकारिविषयं मिथ्यापि सद्बोधकम् ।
मायाथन्तु रवीश्वरस्य(?) मुखतः कूटस्थ...ज्ञानतो(?)
दृष्टान्तैः परिणामसम्भ्रम इति ब्रह्मैकमेकान्ततः ॥ २१ ॥

जिज्ञासितेप्सितजिहासितबुद्धिगम्यं
रूपेण केनचिदिदं जगदिष्टमेव ।
इच्छा च सौख्यसरणी सुखमेवामिष्टं
सर्वं सुखात्मकमतो मदनन्यसौख्यम् ॥ २२ ॥

Colophon: Nil.

Subject: Jñānāṅkuśa with a running commentary; Ślokas 1-25.

Remarks:—The Ms. is in a good condition.

The other works contained herein are:—

1. Nārāyaṇopaniṣad Bhāṣya. (Vide No. 1504)
2. One leaf—An extract from Mahābhārata.
3. Laghuvākyavṛttiprakaraṇa.
4. Saptaślokīprakaraṇa.

Neither the name of the author nor of the commentator could be identified.

॥ ज्ञानांकुशम् (सव्याख्यम्) ॥

## 7662. JNANANKUSAM (SAVYAKHYAM).

J. L. Collection No. 984.

Substance—Paper. Size—9¾ × 4 inches. Sheets—7. Lines—8-11 to a Page. Script—Devanāgarī. No. of Granthas—160. Author—? Complete. Not printed.

Beginning—Same as No. 7662.

End :

॥ मू ॥ सर्वतः परिधावन्तं मनोमत्तमतङ्गजम् ।
ज्ञानाङ्कुशवशं नीत्वा पुनः पन्थानमानयेत् ॥ २५ ॥

॥ व्या ॥ एतत्प्रकरणप्रयोजनमुपपादयन्नुपसंहरति— सर्वत इति ॥

मनसि साधनचतुष्टयसम्पन्नस्याधिकारिणः सद्रूपसत्ता· श्रवणादिक्रमेण ज्ञानोत्पत्त्या जीवन्मुक्तिर्विदेहकैवल्यं वा सिध्यतीति सर्वं समञ्जसम् ॥ २५ ॥

Colophon :

(मू.) ज्ञानाङ्कुशः समाप्तः ।

(व्या) ज्ञानाङ्कुशटिप्पणं समाप्तम् ।

Subject : Jñānāṅkuśa; 1-25 Ślokas with commentary.

Remarks:—The Ms. is in a fairly good condition.

On the title page are given 8 verses from Viśvaguṇādarśa Campū.

---

॥ आत्मानात्मविवेकः ॥

## 7663. ĀTMĀNĀTMAVIVEKAḤ.

P. A. Collection No. 84.

Substance—Paper. Size—11×8½ inches. Sheets—16. Lines—6 to a Page. Script—Devanāgarī. No. of Granthas—200. Author—? Complete. Not printed.

Beginning :

आत्मनः किन्निमित्तं दुःखं । शरीरपरिग्रहात् । शरीरपरिग्रहः केन वा भवतीति चेत् कर्मणा । कर्म केन वा भवति । रागादिभ्यः । रागादि केन । अभिमानात् । अभिमानोऽपि केन । अविवेकात् । अविवेकः केन । अज्ञानात् । अज्ञानं केन वा भवतीति चेत् । न केनापि भवति । अज्ञानमनाद्यनिर्वचनीयं । अज्ञानादविवेको जायते । अविवेकादभिमानः । अभिमानाद्रागादयः । रागादिभ्यः कर्माणि । कर्मणा शरीरपरिग्रहः । शरीरपरिग्रहाद्दुःखम् । दुःखस्य कदा निवृत्तिः । सर्वात्मना शरीरपरिग्रहाभावे ।

End :

आत्मानात्मविवेकेन कृत्वा तिष्ठति यः पुमान् ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥

आत्मानात्मविवेकेन पुनस्संसारनिह्नुतिः ।
तद्विना जन्मकोट्यापि बन्धच्छेदो न सिध्यति ॥

**Colophon:**

आत्मानात्मविवेकप्रकरणं समाप्तम् ।

नान्यो देवो स्वप्रकाशात्मतीचो
नान्यो मन्त्रो वेदसाराच्च नारात् ।
नान्यत्पन्था मुक्तये तत्त्वबोधात्
नान्यत्कार्यं सर्वसङ्कल्पहानात् ॥

ओं तत्सद्ब्रह्मार्पणमस्तु । हरिः ओम् । सच्चिदानन्दगुरवे नमः ॥

Subject: Ātmānātmaviveka a work on Advaita Vedānta which investigates into the nature of the difference between soul and matter.

Remarks:—The Ms. is in a fairly good condition.

This text completely differs from that which is included in the minor works of Śaṅkarācārya and the authorship is not known.

---

॥ वाक्यसुधाकरः ॥

## 7664. VĀKYASUDHĀKARAḤ.

P. A. Colletion No. 74.

Substance—Paper. Size—8¾ × 4½ inches. Sheets—15 (3-17). Lines—7 or 8 to a Page. Script—Devanāgarī. No. of Granthas—200. Author—? Incomplete. Not printed.

Beginning :

स्वाज्ञानाविरोधिनस्त्वन्निवर्तने च ज्ञानान्तरमपेक्षते । ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव । तत एव निवर्तकान्तरं च नापेक्षते । अथोच्यते ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधीति । तन्न । इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधीति विवेचनीयम् ॥

End :

सा किं परमार्थभूता अपरमार्थभूता वा । न तावत्परमार्थभूता तस्या अपरमार्थान्वयायोगात् । नाप्यपरमार्थभूता परमार्थान्वयायोगात् । अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेत्यलं अतिप्रसङ्गेन ॥

**Colophon**: Nil.

**Subject**: **Vākyasudhākara**.

**Remarks**:—The Ms. is in good condition. This must be distinguished from Vākyasudhā which is published with the name **Vākyasudhākara** at Benares.

---

## ॥ सिद्धस्वरूपविवरणम् ॥

## 7665. SIDDHASVARŪPAVIVARAṆAṂ.

**Burnell's Catalogue No. 9879. Page 97. Left column.**

**Substance—Palm leaf. Size—12½ × 1½ inches. Leaves—725**

89. Lines—7 to a Page. Script – Grantha No. of Granthas—200. Author—? Incomplete. Not printed.

**Beginning:**

......कल्पनाक्लेशः एकधा भवति । स त्रिधेत्यादिवाक्यानामुपासकविषयत्वात् न च देहपातश्च......प्रारब्धस्य विनाशान्तस्य 'तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यते' इति श्रुतेः । कर्मविपाकेन प्रारब्धनिवृत्तावपि उक्तशास्त्रज्ञानानिवर्त्यत्वाभिधानात् । ततश्च ज्ञानेन तदानीमेवाज्ञाने सर्वात्मना निवर्तयितव्ये प्रारब्धप्रतिबन्धादनिवृत्तिः ।

End:

वेदोक्तोपायोपेतो वेदान्तवाक्यादहंब्रह्मास्मीति ब्रह्मात्मा नाम....त्यमुच्यत इति वेदान्तसिद्धान्तः । तत्र केचिदाहुः । अस्य संसारिणो ब्रह्मविरुद्धस्वभावत्वात् न ब्रह्मात्मज्ञानान्मोक्षः किन्तु कर्मणा मोक्षः । कर्मसमुच्चिताद्ज्ञानादिति त...नुपपन्नम् । कर्मकार्यत्वे मोक्षस्य अत्यत्वप्रसंगात् । आत्मनो विपरीतरूपस्य चाज्ञानाध्यस्तत्वात् । अज्ञानस्य च सम्यक् ज्ञानेन निवृत्ते......संसारस्य च निवृत्तेर्ज्ञानादेव मोक्ष इति प्रतिपादयितुमीक्षितृत्वमित्यादिप्रकरणं प्रणीतम् । तत्संक्षेपतो व्याख्यायते ।

ईक्षितृत्वं स्वतस्सिद्धं जन्तूनां भोक्तृताऽन्विता ।

ततोऽन्यता— अज्ञानादित्यतो त्वं प्रसदसीति(?) नि-

वर्त्यते । ईक्षितृत्वं चिद्रूपत्वं अन्यनिरपेक्षं प्राणिनां सि-
द्धम् । ततश्चिद्रूपाय........ ।

Subject: Siddhasvarūpavivaraṇa.

Leaf No. 16 स्मृतिविवरणम् (196 verses witha commentary)

,, 19 अचक्षुष्ट्वादित्यस्य विवरणम्

,, 35 प्रकाशस्थमित्यादिविवरणम्

,, 36 ईक्षितृत्वामित्यादिविवरणम्

(11 verses; total 108 verses)

,, 39 दशिस्वरूपविवरणम् (88 verses)

Remarks:—The Ms. is in good condition. The title

"सिद्धस्वरूपविवरणम्"

is given on the cover. The author's name is not known.

---

॥ ज्ञानप्रबोधमञ्जरी ॥

## 7666. JÑĀNAPRABODHAMAÑJARĪ.

Burnell's Catalogue No. 6560. Page 94. Left column. Substance—Paper. Size—9½ × 4½ inches. Sheets—18. Lines—8 or 9 to a page. Script—Devanāgarī. No. of Granthas—160. Author—? Complete. Not Printed.

Beginning:

श्री गणेशाय नमः ।

शिष्य उवाच । हे गुरो संसारोत्पत्ति स्थितिं विनाशं
यथोक्तं कथय । संसारस्वरूपं ज्ञात्वा यथाहं मुच्ये[ते](यम्) ।

यथा तव निजस्वरूपं ज्ञात्वा जन्ममरणदुःखपापपुण्यकर्मकोटिबन्धनान्मुच्येऽहं । तापत्रयरूपात्संसारात् श्रीरामं शरणं गच्छेयम् ।

End:

ज्ञानं सदा प्रकाशरूपं । मायागुणाः सदाज्ञानरूपा अन्धकारस्थानीयाः । एवं ज्ञातव्यं तदा कृतकृत्यो भवति ।

Colophon: Nil.

Subject: Jñānaprabodhamañjarī.

Remarks:—The Ms. is in a fairly good condition. It is full of scriptorial blunders.

---

## ॥ ज्ञानप्रबोधमञ्जरी ॥

## 7567. JÑĀNAPRABODHAMAÑJARĪ.

Burnell's Catalogue No. 6561. Page 94. Left column. Substance—Paper. Size—9 × 4½ inches. Sheets—13. Lines—10 to a Page. Script—Devanāgarī. No. of Granthas—160. Author—? Complete. Printed.

Beginning, end and subject—Same as No. 7666.

Colophon:

इति ज्ञानप्रबोधमञ्जरी समाप्ता ।

Remarks:—The Ms. is in good condition. After the colophon is given the following—

नृत्यन्ती तव वक्षिणाङ्गणगता कालः स्वभावादिभि-

र्भावान्सत्वरजस्तमोगुणमयानुन्मूलयन्ती बहून् ।

मामाक्रम्य यदा शिरस्यतिभरं संमर्दयत्यातुरं

मायाते(तः) शरणं गतोऽस्मि नृहरे त्वामेव तां वारय ॥ १ ॥

नृदेहमाद्यं सुलभं सुदुर्लभं

प्लवं सुकल्पं गुरुकर्णधारम् ।

मयानुकूलेन नभस्वतेरितं

पुमान् भवाब्धिं न तरेत्स आत्महा ॥ २ ॥

---

## ॥ शिष्यप्रश्नोपनिषत् ॥

## 7668. ŚIṢYAPRAŚNOPANIṢAD.

Burnell's Catalogue No. 6556. Page 94. Left column. Substance—Paper. Size—$9\frac{1}{2} \times 4\frac{1}{4}$ inches. Sheets—10. Lines—8 to a Page. Script—Devanāgarī. No. of Granthas—160. Author—? Incomplete, wants end. Not Printed.

Beginning :

श्रीरामवरद ।

अथ शिष्येण सप्त प्रश्नाः कृताः । ते कथं ।

तथा प्रोवाच शिष्यस्तु ब्रह्मशब्देन श[ब्दितम्] ।

जीवशब्देन च तथा क उक्तस्स्यात्तदुच्यताम् ॥ १ ॥

मायाकाकस्या(मायायाश्च तु का) शक्तिः तत्स्वरूपं च

कीदृशम् ।

अविद्यायाः कथं रीतिः किमात्मासौ तथा भवेत् ॥ २ ॥

प्रपञ्चोऽयं तथा.... कीर्तितः कीदृशात्मकः ।

संसारो नास्तिताप्रायो जीवस्स्यात्किन्निमित्तकः ॥ ३ ॥

एतत्प्रश्नोत्तरं वाच्यं मन्मनोरथपूर्वकम् ।

कर्तव्यं मां च सर्वज्ञं सद्गुरो कृपया त्वया ॥ ४ ॥

End :

रागद्वेषभया लज्जा मोहं चैव तु पञ्चकम् ।

व्योमपञ्चकमिति प्रोक्तं चतुरैस्तत्ववादिभिः ॥ १० ॥

ते षड्भावविकाराः के । अस्ति जायते वर्धते विपरिणमते अपक्षीयते विनश्यति इत्येते षड्विकाराः । एतैर्विकारैः युक्तं शरीरं मनुष्यजातीयब्राह्मणक्षत्रियवैश्यशूद्रभेदभिन्नम् । ब्रह्मचारीगृहस्थवानप्रस्थयतिरूपाश्रमभेदभिन्नः । अत्रिवसिष्ठकश्यपगौतमादिगोत्रभेदाभिन्नश्च । देवदत्तयज्ञदत्तविष्णु... ।

Colophon : Nil.

Subject: Śiṣyapraśnopaniṣad containing seven questions from a pupil and answers from a preceptor.

Remarks:—The Ms. is in a fairly good condition. On the last sheet is given:

गुरुशिष्यकृतसप्तप्रश्न ।

॥ स्वरूपब्रह्मभावना ॥

## 7669. SVARŪPABRAHMABHĀVANĀ.

Burnell's Catologue No. 9902 a. Page 95. Right column. Substance—Palm leaf. Size—8×1 inches. Leaves—20 (6-25). Lines—5 to a Page. Script—Grantha. No. of Granthas—150. Author—Svaprakāśayati. Complete. Not Printed.

Beginning :

(नत्वा) श्रीवासुदेवेन्द्रगुरूनिह यथामति ।
कुरुते स्वप्रकाशेन्द्रः स्वरूपब्रह्मभावनाम् ॥

इह जगति ये मुमुक्षवः श्रुतवन्तोऽपि कोमलकण्डकाय-मान...रूपतत्त्वज्ञानमन्तुष्टा मननिदिध्यासनयोरलसा-स्सन्तः ...वनाविपरीतभावनाभ्यां पुनरपि संसारसम्भा-वितो वा उत वर्तमान...रानन्तरं मुक्तिरेव वेति भावाव-गतिं निश्चेतुमसमर्थाः तेषाम...रब्धफलविशेषैः तच्छरीर-दशायामेव बाह्यस्पर्शं विनापि 'स एको ब्रह्मण आनन्दः' इत्युपनिषद्बोधितमुमुक्षुप्राप्यानिवृत्तिनिरतिशयनिजानन्दा-नुभवा...त्ससमाधिमार्गपरिज्ञानसंपादकमिदं स्वस्वरूपब्र-ह्मभावनावाक्यम् ।

End :

अज्ञानस्यानिर्वचनीयत्वाच तत्र सावयवत्वशंकावका-शः । तथा चोक्तं—'एवं त्रिधा नश्यति चात्ममाया' इति ।

तस्मादकल्पितान्तरालोकनामकमस्मद्वास्तवस्वरूपं साक्षि-
चैतन्यमेव मुमुक्षुप्राप्यम् । शुद्धचैतन्यं परं ब्रह्म सिद्धं न
समीक्षितम् ।

ये त्विदं भावनावाक्यं सायंप्रातरतन्द्रिताः ।
पठन्तोऽर्थानुसन्धानपूर्वकं ब्रह्मभावनाम् ॥
कुर्वन्ति साक्षिचैतन्ये पञ्चकोशान्तरस्फुटे ।
जीवस्य वास्तवे रूपे वस्तुतः परमात्मनि ।
वर्तमानशरीरान्ते संसाराब्धिं तरन्ति ते ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीभगवद्वासुदेवेन्द्रसरस्वती-
श्रीचरणशिष्यश्रीस्वप्रकाशेन्द्रसरस्वतीरचितं मुमुक्षूणामसंभा-
वनाविपरीतभावनाविरोधिनिजानन्दानुभवानुकूलसमाधिचतुष्टये -
ऽपि स्वस्वरूपब्रह्मभावनयावस्थानमार्गप्रदर्शकं स्वस्वरूपब्रह्म-
भावनावाक्यं संपूर्णम् ।

Subject: Svarūpabrahmabhāvanā, a treatise on self-meditation to help seekers in Samādhi.

Remarks:— The Ms. is in a good condition. The other works contained herein are:—

1. Prāṇāyāmaprakaraṇa.
2. Cidacidgranthiviveka.

The last also is the work of this author. This author must be distinguished from the famous Svayamprakāśayati the author of many Vedāntā works like Haratattvamuktāvalī.

## ॥ चिदाचिद्ग्रन्थिविवेकः ॥

## 7670. CIDACIDGRANTHIVIVEKAḤ.

Burnell's Catalogue No. 9902 b. Page 95. Right column. **Substance**— Palm leaf. Size —8×1 **inches**. Leaves—27-51. Lines—5 to a Page. Script—Grantha. No. of **Grantha**—150. Author—Svaprakāśayati. Complete. Not Printed.

**Beginning:**

श्रीवासुदेवेन्द्रगुरून् प्रणम्य

तेषां प्रसादोदिदयातितीर्षुः ।

*   *

पुराणशास्त्रागमकल्पपादपा-

द्यदासि(स्ति) माधूकांवि(कर)वृत्ति सञ्चितम् ।

मया स्वतत्त्वैकफलं हि तादृश-

प्रकाशनं चात्मविचारहेतुकम् ॥

स्वप्रकाशानुसारेण स्वप्रकाशेन्द्रयोगिना ।

अनादिश्चिदचिद्ग्रन्थिविवेकोऽयं वितन्यते ॥

अथ कोऽयमात्मा यद्विचारः स्वतत्त्वाख्यफलस्वरूपा-नन्दरसाभिव्यञ्जकः । स्वयं शब्दार्थे ज्ञात्वा तर्हि त... पाक इति चेदुच्यते ।

**End:**

अज्ञानतत्कार्यातिरिक्त एवात्मेति प्रतिपादितवान् ।

तथा च स्वयमहमित्यत्रात्मशब्दलक्षणया साक्षिबोधक एव ।

Colophon:

इति चिदचिद्ग्रन्थिविवेके पञ्चकोशविवेकः समाप्तः ॥

Subject: Cidacidgranthiviveka, a treatise dealing what is Ātman and Anātmn.

Remarks:—The Ms. is in good condition. For the other works contained herein see remarks under No. 7669.

---

## ॥ चिदचिद्ग्रन्थिविवेकः ॥

## 7671. CIDACIDGRANTHIVIVEKAḤ.

Burnell's Catalogue No. 9902 c. Page 95 Right column. Substance—Palm leaf. Size—8⅛ × 1 inches. Leaves —25 (27-51). Lines- 5 to a Page. Script—Grantha. No. of Granthas—150. Author—Svaprakāśayati. Incomplete. Not printed.

Beginning:

अस्त्येवात्र हि पञ्चकोशकुहरे यद्ब्रह्मतत्त्वं निजं
भूत्वा यद्यपि कोशपञ्चकमतोऽभ्यं विवेकार्थिना ।
मुक्तानात्ममिदंत्यथापि सहसा निश्रेयसाकांक्षिभिः
प्रेक्षावद्भिरवाप्यते श्रुतिशिरोभेदेन तत्सौम्यहम् ॥

श्रीवासुदेवेन्द्रगुरून् प्रणम्य
तेषां प्रसादोदितया तितीर्षुः ।
अस्मीह देहात्मविवेकनावा
विस्तारवातेरितया भवाब्धिम् ॥

पुराणशास्त्रागमकल्पपादपा-
　　द्यदस्ति माधूकरवृत्तिसंचितम् ।
मया स्वतत्त्वैकफलं हि तादृश-
　　प्रकाशनं चात्मविचारहेतुकम् ॥

स्वप्रकाशानुरोधेन स्वप्रकाशेन्द्रयोगिना ।
अनादिचिदचिद्ग्रन्थिविवेकोऽयं वितन्यते ॥

End:

'स एकोऽवशिष्टः शिवः केवलोऽहम्' इत्यादिभिः दशभिः श्लोकैः अज्ञानतत्कार्यातिरिक्त एवात्मेति प्रतिपादितवान्। तथा च स्वयमहमित्यत्र अस्मच्छब्दः लक्षणया साक्षिबोधक एव ।

Colophon:

इति चिदचिद्ग्रन्थिविवेके पञ्चकोशविवेकः समाप्तः ।

Subject: Cidacidgranthivivekaḥ, a work dealing with the difference between chit and achit.

Remarks:—The Ms. is in a fairly good condition.

Dr. Burnell gives the name of this work as Pañcakośaviveka.

For other work contained herein vide No. 7669.

The author calls himself the desciple of Vāsudevendra and it is doubted if this is the same Vāsudevendra to whom Tattvabodha is ascribed.

## ॥ गुरुशिष्यकथनम् ॥

## 7672. GURUŚIṢYAKATHANAM.

Burnell's Catalogue No. 6562. Page 94 a. Left column. Substance—Paper. Size—8¼ × 1½ inches. Sheets—9. Lines—10 to a Page. Script—Devanāgarī. No. of Granthas—150. Author—? Complete. Not Printed.

**Beginning:**

श्री गणेशाय नमः ।

प्रणम्य शंकरं देवं महेश्वरपरात्परम् ।
आत्मबोधप्रकाशिन्यां ब्रूहि मे परमेश्वर ॥ १ ॥

सुकृतं परमं ध्यानं परं ब्रह्म भयापहम् ।
उत्पत्तिप्रलयं नास्ति इदं ब्रूहि महाप्रभो ॥ २ ॥

कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
प्रणम्य शिरसा स्वामी कृष्णो वचनमब्रवीत् ॥ ३ ॥

ईश्वर उवाच ॥

असंख्या....ब्रह्म जानाति कोटि ........ ।
.......... .....विष्णुप्रलयं गत्वा ॥ ४ ॥

**End:**

गुह्यं परात्परं ब्रह्म कथितं च महाप्रभो ।
समर्थो वाऽसमर्थोऽपि यथा इच्छा तथा कुरु ॥ २८ ॥

क्षयं व्याधी च रोगी च अपस्मारोचनस्तथा(?) ।
क्षुधा तृष्णा तथा निद्रा मुच्यते च शनैः शनैः ॥ २९ ॥

स्वयं ब्रह्मा स्वयं विष्णुः स्वयं देवो महेश्वरः ।

स्वयं सिद्धः स्वयं बुद्धः स्वयं त्रैलोक्यतारकम् ॥ ३० ॥

Colophon:

इति श्रीहरिहरसंवादे गुरुशिष्यकथनं सम्पूर्णमस्तु ।

श्रीगुरुनाथार्पणमस्तु ।

Subject: Guruśiṣyakathana, written in the form of a dialogue between Hari and Hara on Vedānta.

Remarks:—The Ms. is in a fairly good condition and full of scriptorial blunders.

---

॥ सिद्धान्ततत्त्वम् ॥

## 7673. SIDDHĀNTATATTVAM.

Burnell's Catalogue No. 9838. Page 95. Right column. Substance—Palm leaf. Size—12¾ × 1½ inches. Leaves—19. Lines—7 to a Page. Script—Grantha. No. of Granthas—150. Author—Anantadeva. Incomplete (Wants beginning). Printed.

Beginning:

आत्माहंकारादिदेहान्ताविद्यापरिकल्पित..........

चेति यो भावो मिथ्याप्रत्ययः एष ब्रह्मा अज्ञानविजृम्भितः स चात्मैकत्वविज्ञाने बीजनिवृत्तौ न विद्यते । तस्मान्मूलाभावे कुतं फल......हमादिलक्षणस्ये (?) । आत्मैकत्वं केन प्रकारेण अवगम्यत इति चेत् वेदान्तप्रमाणेन प्रतिपत्तव्यमित्याह ।

End.

अज्ञानोपहितश्च साक्षी । अज्ञाने च शक्तिद्वयमप्यावश्यकम् । तच्च कचित् संबद्धं जडत्वात् । ततश्च विक्षेपशक्तिसंबद्धश्चैतन्यमीश्वरः । आवरणशक्तिसंबद्धं चैतन्यं जीवः । इति जीवेश्वरयोरनादित्वम् । ततस्तयोर्भेदानुपपत्तेः लक्षणया * * *

श्रवणादिपरिपाकसमुत्पन्नतत्त्वज्ञानस्य ज्ञानस्याज्ञानतत्कार्यबाधे सति सत्यज्ञानानन्दाखण्डाद्वितीयं वस्तुमात्रमवशिष्यते नान्यत् ।

Colophon:

इत्थं परिव्राजकतीर्थपाद-
श्रीरामतीर्थानुस्मृतिप्रसादात् ।
सिद्धान्ततत्त्वं गतवाग्विशादं
अनन्तदेवेन मुदा न्यरूपि ॥

इत्येषा वाङ्मयी पूजा श्रीमद्गोपालपादयोः ।
अर्पिता तेन मे देवः प्रीयतां परमेश्वरः ॥

इति श्रीमत्सकलदिङ्मण्डलविश्रान्तयशोमण्डलनिखिलश्रुतिशिरस्तत्त्वपरिशीलनमर्यादाधुरन्धरश्रीमदापदेवसूनुनाऽनन्तदेवेन कृतं सिद्धान्ततत्त्वनाम प्रकरणम् ।

Subject: Sidhântatattva a primer on Adwaita philosophy.

Remarks:—The Ms. is in a fairly good condition.

After the colophon is given—

श्रीमत्कौशिकवंश्येन श्रीनिवासविपश्चिता ।
लिखिता रामभक्तेन नाम्ना सिद्धा.......... ॥

The other work contained herein is a fragment of the Upadeśasāhasrī—Padya Grantha, with commentary. Vide No. 7218 (Vol. XII.)

This work, Siddhāntatattva is by Anantadeva, the father of Āpadeva, who has written Mīmāmsānyāyaprakāśa and Bālabodhinī. Anantadeva's father also was called Āpadeva.

He must not be confounded with his grandson, Anantadeva II, the author of a commentary on Āpadeva's Nyāyaprakāśa and Smṛtikaustubha. Thus the author of the Siddhāntatattva lived in the end of the 16th century He is the pupil of Rāmatīrtha, a commentator on the Saṅkṣepa Śārīraka. Vide pp. 100-102, J. O. R. Madras Vol. II. 1928.

The work has been published in "the Pandit" Series, Benares. He is also the author of a commentary on Tattvaprakriyā. This author is also called Govindadeva as can be known from his commentary on Tattvaprakriyā.

---

॥ महावाक्यदीक्षा ॥

## 7674. MAHĀVĀKYADĪKṢĀ.

J. L. Collection No. 987.

Substance—Paper. Size—5¼ × 4½ inches. Sheets—1-16. Lines—10 to a Page. Script—Devanāgarī. No. of Granthas—185. Author—? Incomplete. Not printed.

**Beginning:**

शुक्लाम्बरधरं + सर्वविघ्नोपशान्तये ॥

ओं। सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥

ओं मं मण्डूकाय नमः । ॐ कालाग्निरुद्राय नमः।
योगः । ओंकारस्य सूर्य ऋषिः जगती च्छन्दः। ईश्वरो देवता ।

End:

इति ध्यानं । " ओं तद्ब्रह्म । ओं तद्वायुः। ओं तत्सत्यं। ओं तत्सर्वं । ओं तत्पुरोत(र्न)मः। अन्तश्चरति भूतेषु गुहायां विश्व........(मूर्तिषु) " ।

Subject: Mahāvākyadīkṣā.

Remarks:—The Ms. is in a decaying condition and ends abruptly.

---

## ॥ श्रुतिसारः ॥

## 7675. ŚRUTISĀRAḤ.

Burnell's Catalogue No. 6424. Page 92. Right column. Substance—Paper. Size—8½ × 5 inches. Sheets—12. Lines—9 to a Page. Script—Devanāgarī. No. of Granthas—180. Author—Pūrṇānanda. Complete. Not printed.

Beginning:

श्री गणेशाय नमः। श्री सरस्वत्यै नमः ।
श्रीमद्गुरुमूर्तये नमः ।

दिवि भूमौ तथाकाशे बहिरन्तश्च मे विभुः ।

यो विभात्यवभासात्मा तस्मै ज्ञानात्मने नमः ॥

अथात्मप्रतिपादनम् । अयमात्मा स्वानुभवगम्यः । स्वसंवेद्यः ।

को देवो यो मनस्साक्षी मनो मे दृश्यते मया ।

स हि देवत्वमेवासीत्येको देव इति श्रुतेः ॥

तथा च श्रुतिः ॥

'एको देवः सर्वभूतेषु गूढः

सर्वव्यापी सर्वभूतान्तरात्मा ।

कर्माध्यक्षः सर्वभूताधिवासः

साक्षी चेता केवलो निर्गुणश्च ॥'

इत्याथर्वणी श्रुतिः ।

End:

न हि बन्धपदं न हि मोक्षपदं

न हि पापपदं न हि पुण्यपदम् ।

न हि पूर्णपदं न हि रिक्तपदं

किमरोदसि मानस सर्वं समम् ॥

दत्तात्रेयप्रसादेन श्रुतिसारो मया कृतः ।

पूर्णानन्दमुनीन्द्रेण सर्वलोकोपकारकः ॥

Colophon:

इति श्रुतिसारः पूर्णानन्दविरचितः श्रीरामार्पणमस्तु ॥

Subject: Srutisāra a treatise purporting to give the essence of Upaniṣads on Vedānta.

**Remarks:**—The Ms. is in a fairly good condition. On the title sheet is given:

पुस्तकश्रुतिसारपूर्णानन्दकृतम् । ग्रन्थसंग्रहकर्ता राजेश्री नारोतानाजि तत्त्वज्ञः ।

This work, must be distinguished from another Śrutisāra which is said to be by Toṭakacārya. The author evidently appears to be a Northern Indian.

---

## ॥ श्रुतिसारः ॥

## 7676. ŚRUTISĀRAḤ.

Burnell's Catalogue No. 6425. Page 92. Right column. **Substance**—Paper. Size—8 × 4½ inches. Sheets—11. Lines—9 to a Page. Script—Devanāgarī. No. of Granthas—130. Author—Pūrṇānandaḥ. Complete. Not printed.

Beginning, end, colophon and subject—Same as No. 7675.

**Remarks** :—The Ms. is in a fairly good condition.

---

## ॥ श्रुतिसारः (सटीकः) ॥

## 7677. ŚRUTISĀRAḤ (SAṬĪKAḤ.)

Burnell's Catalogue No. 9892. Page 95. Left column. **Substance**—Palm leaf. Size—18¼ × 1¾ inches. Leaves—21 (48-89). Lines—6 to a Page. Script—Telugu. No. of Granthas—1000. Author—Toṭakācārya. Complete. Not printed.

**Beginning:**

..............................

श्रीकृष्णं प्रत्यगात्मानं भक्त्या नत्वा गुरूनपि ।
टीकामुदाहरिष्यामि तोटकश्लोकगामिनीम् ॥

तत्र त्रैलोक्ये........नवादिमित्यादिना मध्यश्लोके स्वे-
ष्टदेवतागुरुनमस्कारस्यादौ ............................ ।
ननु प्रकरणं नाम शास्त्रैकदेशसंबन्धं शास्त्रकारा............
क्षणशे रूढ इति चेत् ॥

**End:**

यस्यान्तस्थं......गोभोगिगन्धर्वदैत्यैः....
....चित्रं नानाविधं विश्वं रम्यत्यतिशयेन
रमते तत्र.........................
.......................विष्णुं मुहुर्मुहुर्नमामि ॥

**Colophon:**

श्रीमच्छङ्करभगवत्पादशिष्यतोटकाचार्यविरचितं श्रुतिसार(स)-
मुद्धरणाख्यं प्रकरणं समाप्तम् ॥

इति मन्दमुमुक्षूणां तत्त्वयोगप्रसिद्धये ।
तोटकश्लोकटीकेयं रचिता पददीपिका ॥

इति श्रीमत्पूर्णात्मयोगीन्द्रशिष्येण चिदानन्दयोगिना विर-
चिता तत्त्वदीपिका तोटकश्लोकटीका समाप्ता ।

Subject: Śrutisāra otherwise known as Śrutisārasamuddharaṇa with a ṭīkā named Tattvadīpikā or Padadīpikā which is said to be the work of Cidānandayogin.

Remarks:—The Ms. is in a decaying condition. This work must be distinguished from another Śrutisāra by Pūrṇānanda. (No. 7675) If the text is as is said by Toṭakācārya the work is valuable and rare.

---

## ॥ साक्ष्यसाक्षिविवेकः ॥

## 7678. SĀKṢYASĀKṢIVIVEKAḤ.

Burnell's Catalogue. No. 9667 d.

Substance—Palm leaf. Size—15 × 1¼ inches. Leaves—5 (3-7) in the end. Lines—10 to a Page. Script—Grantha. No. of Granthas—125. Author—? Complete. Not Printed.

**Beginning:**

साधूनामनेकजन्मसमनुष्ठितविविधसत्कर्मविधूतपातकानां अत एव शुद्धान्तःकरणानां साधनचतुष्टयसम्पन्नानामात्मज्ञानार्थं चतुर्विंशतितत्त्वोत्पत्तिप्रकारप्रदर्शनपुरस्सरं साक्ष्यसाक्षिपरिशोधना क्रियते । तत्र साधनचतुष्टयं नाम नित्यानित्यवस्तुविवेकः ।

* *

मुमुक्षुत्वं नाम मुक्ताविच्छा । तत्र तावत् साक्षिस्वरूपं निरूप्यते ।

**End:**

तस्मात्त्वंपदलक्ष्यार्थभूतकूटस्थस्यैव साक्षिणः तत्पदलक्ष्यार्थेन परिपूर्णेन ब्रह्मणा बोधयत्यत्यन्तं तत्त्वमस्यादिवा-

कथम् । एतत्साक्ष्यभिन्नब्रह्मैवाहवस्मीति बुद्ध्या तद्व्यतिरिक्तं साक्षिप्रपञ्चजातमसत्यमिति विलाप्य विलम्ब्यत इति । अत्र श्रुतिः । जीवन्मुक्तः सन् प्रारब्धक्षयानन्तरं विदेहमुक्तो भवति । तत्र श्रुतिः । 'भूयश्चान्ते विश्वमायानिवृत्तिः ॥' इति ।

साक्ष्यसाक्षिपरिशोधनन्त्विदं
ग्रन्थतो विरचितो नृकेसरी ।
भक्तरक्षणकृतोद्यमस्सदा
प्रीतिमेति नितरां मयार्चितः ॥

**Colophon:**

साक्षिविवेकः समाप्तः । श्रीनृसिंहराजाय नमः ।

Subject: Sākṣyasākṣiviveka a treatise differentiating the soul from matter, a work on the lines of Dṛgdṛśyaviveka.

**Remarks**:—The Ms. is in a fairly good condition. For the other works contained herein see remarks under No. 7457.

---

## ॥ वेदान्तविलासः ॥

## 7679. VEDĀNTAVILĀSAḤ.

**Burnell's Catalogue No.** 12174 f. Page 208. Right column. **Substance**—Palm leaf. **Size**—17¼ × 1½ inches. **Leaves**—3 (33-35). Lines—6 to a Page. Script—Telugu. No. of Granthas—100. Author—?. Incomplete. Not Printed.

Beginning:

तत्तदाकारवृत्त्युपहिततत्त्वस्य प्रमातृविशेषणत्वात् ।... कारवृत्तिदशायां परिमाणाकारवृत्त्यभावे......कपरिमाणाकारवृत्त्युपहितप्रमात्रा चैतन्यभिन्नसत्ताकत्वाभावे नातिव्याप्त्यभावात् ।

End:

ननु साक्ष्यध्यस्ततापी....रजतमिति प्रत्ययस्स्यादहं सुखीति वदति चेत् उच्यते । स हि सुखादीनां अन्तःकरणावच्छिन्नचैतन्याध्यस्तत्वप्रयुक्तमहं सुखीति ज्ञानम् ॥

Colophon: Nil.

Subject: Vedāntavilāsaḥ.

Remarks: —The Ms. is in a fairly good condition. The other works contained herein are mantras. There is a loose leaf at the end dealing with व्याकरण. This is an extract from some Vedanta treatise.

---

## ॥ अहमर्थविवेकः ॥

## 7680. AHAMARTHAVIVEKAḤ.

Burnell's Catalogue No. 9717 c

Substance—Palm leaf. Size—$14\frac{1}{4} \times 1\frac{1}{4}$ inches. Leaves—11-15. Lines—5 to a Page. Script—Telugu. No. of Granthas—100. Author—? Incomplete. Not Printed.

Beginning:

श्री सूतः ।

वक्ष्यामि परमं गुह्यं युष्माकं मुनिपुङ्गवाः ।
विनि......नं वेदसंभूतं भक्तानां...... ॥

रुद्रविष्णुप्रजानाथप्रमुखाः सर्वचेतनाः ।
स्वभावेनाहमित्याहुः इदमित्यपि चिन्त्वतः ॥

इदं बोद्धव्यसव्यार्थे त्वहंबुद्धिस्तथात्मनि ।
प्रसिद्धा सर्वजन्तूनां विवादोऽत्र न कश्चन ॥

End:

अनुगृह्णाति तं शिष्यं ममता कृपया तदा ।
तदहं सुखदं नित्यमविनाशं त्रिनश्वरम् ॥
तुभ्यं वक्ष्यामि कृपया सच्चिदानन्दलक्षणम् ॥
स्कन्दः ॥
सर्वात्मन् सर्वसाक्षिन् सर्वभूते रत... ।
येन ज्ञानेन मे देव मुक्तिर्भवति तत्क्षणात् ॥
तज्ज्ञानं श्रोतुमि....मद्वचः शृणु शंकर ॥
स्कन्दः ।

Subject: Ahamarthavivekaḥ.

Remarks—The Ms. is in decaying condition. For the other works contained herein see remarks under No. 1404.

---

## ॥ असङ्गात्मप्रकरणम् ॥

## 7681. ASAṄGĀTMAPRAKARAṆAM.

Burnell's Catalogue No. 9664. Page 93. Left column.

Substance—Palm leaf. Size—16×1½ inches. Leaves—14-21. Lines—7 to a Page. Script—Telugu. No.of Granthas—100. Author—Śaṅkarabhāratītīrtha. Incomplete. Not printed.

Beginning:

(तटाकस्थं य)था तोयं नानारूपेण निश्चलम् ।
भाति दण्डप्रहारेण तथा ब्रह्मेति निश्चिनु ॥

तटाकस्य तोयं निश्चलं दण्डप्रहारेण यथा नानारूपेण प्रतीयते, ब्रह्मापि तेनैव प्रकारेण नानेव भाति । वस्तुत एक एवेति निश्चिनु । 'अजायमानो बहुधा विजायत' इति श्रुतेः 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेः ।

End:

इदं प्रकरणं नित्यं येऽनुसंदधते बुधाः ।
अनायासेन मर्त्यत्वं हित्वा यान्ति परं पदम् ॥
ब्रह्मज्ञानोदयात्पूर्वं देहभावं (स)दागतिम् ।

मर्त्यत्वं अहं ब्रह्मास्मीति न्यायेन देहाभिमानं परित्यज्य अनायासेनैव परं पदं निरतिशयानन्दत्वमेति नान्यः पन्था विद्यते ब्रह्म प्राप्नुवन्तीत्यर्थः । 'ब्रह्म वेद ब्रह्मैव भवति' । 'ब्रह्मसंस्थोऽमृतत्वमेति' । 'तरति शोकमात्मवित्' । इति ।

Colophon:

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमन्नृसिंह्मभारतीतीर्थ-

शिष्येण श्रीमच्छङ्करभारतीतीर्थविरचितं असङ्गात्म-

प्रकरणं सव्याख्यं सम्पूर्णम् ॥

Subject: Asaṅgātmaprakaraṇa a treatise on Advaita Vedānta explaining that the soul is differant from mind, senses, intellect etc.

Remarks:— The Ms. is in a fairly good condition. The names of Guru and Śiṣya suggest that they were the heads of Sringeri Mutt.

---

॥ तत्त्वबोधः ॥

## 7682. TATTVABODHAḤ.

J. L. Collection No. 982.

Substance—Paper. Size—5¼×4 inches. Sheets—12. Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—85. Author—Vāsudevendra. Complete. Printed.

**Beginning:**

श्रीगणेशाय नमः ॥

वासुदेवेन्द्रयोगीन्द्रं नत्वा ज्ञानप्रदं गुरुम् ।

मुमुक्षूणां यथार्थाय तत्त्वबोधो विधीयते ॥ १ ॥

साधनचतुष्टयसम्पन्नाधिकारिणां मोक्षसाधनभूततत्त्ववि-

वेकप्रकारं वक्ष्यामः ॥

**End:**

ज्ञानिनो देहो गङ्गायां सुक्षेत्रे वा कीटके वा यत्र कुत्र-

पि वा पततु न तस्य तावता हानिः । स्वानन्दमग्नस्य कृतार्थस्य सर्वेभ्यः कर्मभ्यः मुक्तस्येति एतदालोड्य स्वानन्दो भूत्वा कृतार्थो भवति ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वासुदेवेन्द्रस्वामिकृततत्त्वबोधप्रकरणं समाप्तम् ॥

Subject: Tattvabodha

**Remarks:**—The Ms. is in a fairly good condition. The name of the author's Guru appears to be Vāsudevendra Yogīndra from the introductory verse; but the colophon gives the author's name also as Vāsudevendra. Probably the author and his guru bore the same name. Whether the author is the same as the author of Cidacidgranthiviveka. (No. 7670.) or the latter's Guru deserves further investigation.

Tattvabodha is a very familiar work and is printed in many places and is translated into many North and South Indian Vernaculars. This work is ascribed to Śaṅkarācārya as also to Vāsudevendra. This Ms. does not give us any room for suspicion because the colophon clearly states Vāsudevendra as the author.

---

॥ तत्त्वबोधः ॥

## 7683. TATTVABODHAḤ.

**P. A. Collection No. 125.**

**Substance**—Paper. **Size**—$12\frac{1}{4} \times 5\frac{1}{2}$ inches. **Sheets**—5. **Lines**—8-9 to a Page. **Script**—Devanāgarī. **No. of**

Granthas—75. Author—Vāsudevendra. Complete. Printed.

**Beginning:**

वासुदेवेन्द्रयोगीन्द्रं नत्वा ज्ञानप्रदं गुरुम् ।
मुमुक्षूणां यथार्थाय तत्त्वबोधो विधीयते ॥

साधनचतुष्टयसम्पन्नाधिकारिणां मोक्षसाधनभूतं तत्त्वविवेकप्रकारं वक्ष्यामः ।

End:

स्वानन्दमग्नस्य कृतार्थस्य सर्वेभ्यः कर्मभ्यो मुक्तस्येति एतदालोच्य स्वानन्दो भूत्वा कृतार्थो भवति ।

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमद्वासुदेवेन्द्रस्वामिकृतं तत्त्वबोधप्रकरणं समाप्तम् ।

Subject: Tattvabodha.

Remarks:—The Ms. is in a good condition.

---

## ॥ आत्मविद्याविलासः ॥

## 7684. ĀTMAVIDYĀVILĀSAḤ.

Burnell's Catalogue No. 6475. Page 93. Left column. Substance—Paper. Size—$6\frac{1}{4} \times 8\frac{1}{2}$ inches. Sheets—14. Lines—6 to a Page. Script—Devanāgarī. No. of Granthas—80. Author—Sadāśivabrahman. Complete. Printed.

Beginning:

श्री गणेशाय नमः ॥

वटतरुनिकटनिवासं
पटुतरविज्ञानमुद्रितकराब्जम् ।
कंचन देशिकमाद्यं
कैवल्यानन्दकन्दलं वन्दे ॥ १ ॥

निरवधिसंसृतिजलनिधि-
निपतितजनतारणस्फुरन्नौकाम् ।
परमतभेदनघुटिकां
परमशिवेन्द्रार्यपादुकां नौमि ॥ २ ॥

देशिकपरमशिवेन्द्रा-
देशवशोद्बुद्धदिव्यमहिमाहम् ।
स्वात्मनि विश्रान्तिकृते
सरसं प्रस्तौमि किंचिदिदम् ॥ ३ ॥

End:

इति गुरुकरुणापाङ्गात्
आर्याभिर्व्यधिकषष्टिसंख्याभिः ।
निरवद्याभिरशोचं
निगमशिरस्तन्त्रसारभूतार्थम् ॥ ६२ ॥

गदितमिममात्मविद्या-
विलासमनुवासरं स्मरन्विबुधः ।
परिणतपरमात्मविद्यः
प्रपद्यते सपदि परमार्थम् ॥ ६३ ॥

Colophon :

इति श्रीमद्भगवद्गुरुवर्यसदाशिवब्रह्मकृतात्मविद्याविलासः सम्पूर्णः ।

Subject: Ātmavidyāvilāsā, a poem on the Brahman and the Jivanmukta in 62 verses in Arya metre.

Remarks:—The Ms. is in good condition. For details see under No. 6709.

---

## ॥ आत्मविद्याविलासः ॥

## 7685. ĀTMAVIDYĀVILĀSAḤ.

Burnell's Catalogue No. 4894. Page 165. Left column. Substance—Paper. Size—9¾ × 5¼ inches. Sheets—5. Lines—12 to a Page. Script—Devanāgarī. No. of Granthas—100. Author—Sadāśivabrahman. Complete. Printed.

Beginning, end, colophon and subject—Same as No. 7684.

Remarks:—The Ms. is in a fairly good condition. After the colophon is found a letter to Śarabhoji I, written by Malhāri Paṇḍita, a court-poet of the same, as follows :—

निर्व्याजं भवता दुरीश्वरगृहद्वारासिका त्याजिता:

वीरश्रीशरभक्षितीश्वर वयं किं वाऽन्यदाशास्महे ।

क्षीराब्धालितशर्वशेखरकलाधावल्यगर्वच्छिदा

कीर्त्या भासितदिक्तटा भवतु ते सन्तानपारम्परी ॥ १ ॥

निर्गत्य तञ्जानगरात् श्रीमताभाज्ञया मया ।

कुम्भकोणे गतं तत्र दिनमेकमभूत्स्थितम् ॥ २ ॥

मायूरमगमं स्नात्वा कावेर्यां दिनपञ्चकम् ।
सायंप्रातर्नमस्कृत्य शंकरं लोकशङ्करम् ॥

पुत्रोत्पत्तिं समाशास्य महाराजस्य भूयसीम् ।
पुत्रलाभाय भवतां वैद्यनाथालयं गतः ॥

बालाम्बिकापरिवृढं प्रसाद्य बहुधा ततः ।
समागतोऽस्मि दीपाम्बापुरं तत्सर्वमानितम् ॥

सदाशिवब्रह्मरूपं ब्रह्माद्राक्षं चिरेप्सितम् ।
प्रणम्य प्रार्थितास्ते हि महाराजकृते मया ॥

पुत्रोत्पत्तौ झटित्यत्र प्रसादः क्रियतामिति ।
संज्ञया सूचयन् पुत्रो भविता ह्यचिरादिति ॥

आत्मविद्याविलासाख्यः स्वीयो ग्रन्थः प्रसादितः
युष्माकं भूयसे भाविश्रेयसे कारिता मया ॥

भिक्षाप्तिस्तस्त्वत्प्रसादात्पुत्रसम्पत्तिरुत्तमा ।
जातेयमिति चाश्रौषं श्रीमतां भवतामिह ॥

महत्प्रसादचिह्नानि श्रेयांसीति वदन्ति हि ।
भवत्प्रहितवैद्येन दत्तौषधिनिषेवणात् ॥

आनुकूल्यं शरीरस्य सम्यगेव हि दृश्यते ।
इतःपरं तथा शक्तिर्नास्ति देशान्तराटने ॥

वार्धक्यादपि दौर्बल्यादलंबुध्या च साम्प्रतम् ।
कावेरीतीर एवात्र वस्तव्यमिति निश्चयः ॥

भवत्कल्पाग्रहारेषु तत्रापि स्वरसा रुचिः ।

त्रिकोटिहाख्यके मुक्तिक्षेत्रे प्रीतिरनुत्तमा ॥

ग्रामोपकण्ठे वासार्थं तेषां हि शिवसान्निधौ ।
निर्मातव्यो मठः कश्चिदित्येवं निश्चितं मया ॥

भवतामाज्ञया तत्र जायते मठनिर्मितिः ।
इदं च भवतां सर्वं श्रेयसे प्रार्थ्यते मया ॥

कराहृतमहीचक्रः परसैन्यभयंकरः ।
शरभोजिमहीपालः शरदां शतमेधताम् ॥

करदीकृतभूपाल वरदीकृतवासव ।
शारदीयति ते कीर्तिः शरभोजिमहीपते ॥

मल्लारिपण्डितेन्द्रस्य मात्रा चासौ नियोजितः ।
अनन्तदेवनामासौ पद्यानारचयत्कविः ॥

Thus this Ms. is of considerable historical interest, giving as it does the occasion for the composition of the Ātmavidyāvilāsa by Sadāśivabrahman .

## ATMAVIDYAVILĀṢA.

| Descriptive No. | Collection No. | Substance. | Size nches. | No. of Sheets or leaves. | No. of Lines per Page or sheet. | Script. | Complete or otherwise. |
|---|---|---|---|---|---|---|---|
| 7686 | B. L. 6476 | Paper. | $5\frac{1}{4} \times 3$ | 20 | 5 | Devanāgarī. | Complete. |
| 7687 | „ 6477 | „ | $6\frac{3}{4} \times 3\frac{1}{2}$ | 13 | 6 | „ | „ |
| 7688 | „ 9856 d | Plam leaf. | $1\frac{1}{2} \times 1\frac{1}{2}$ | 6 (214-219) | 7 | Grantha | „ |
| 7689 | „ 9536 b | „ | $8\frac{3}{4} \times 1$ | 5 (166-170) | 5 | „ | „ |
| 7690 | „ 9535 b | „ | $19 \times 11\frac{1}{3}$ | 4 (175-178) | 7 | „ | „ |
| 7691 | „ 9857 d | „ | $8\frac{1}{2} \times 1\frac{1}{4}$ | 3 (82-84) | 8 | „ | „ |
| 7692 | T. S. 174 | Paper. | $10 \times 4\frac{1}{4}$ | 4 | 10 | Devanāgarī. | „ |
| 7693 | J. L. 981 | „ | $9\frac{1}{2} \times 4\frac{1}{2}$ | 3 (2-4) | 10 | „ | Incomplete Ślokās 19 to the end. |

DETAILED REMARKS
on the
ĀTMAVIDYĀVILĀSA MSS.
IN THE ABOVE TABLE.

7688 For other works contained herein see under No 7616.

7689 The text has an additional verse at the beginning—

चिन्मुद्रितकरकमलं चिन्तितभक्तेष्टदं विमलम् ।
गुरुवरमाद्यं कंचन निरवधिकानन्दनिर्भरं वन्दे ॥

The other work contained herein is Paramahamsacaryā. (No. 7614.)

7690 The other work contained herein is Paramahamsacaryā. (No. 7618.)

7691 This text also has the above given additional verse at the beginning. For other works contained herein see remarks under No. 7617.

Dr. Burnell has not noticed this work under this No.

7692 After the colophon is given—

इदं पुस्तकं शिवभट्टपुत्र अप्पानामकस्येति ज्ञेयम् ।

---

## ॥ सिद्धान्तचन्द्रिका ॥

## 7694. SIDDHĀNTACANDRIKĀ.

J. L. Collection No 983.

Substance—Paper. Size—7½ × 5 inches. Sheets—5. Lines—11 to a Page. Script—Devanāgarī. No. of Granthas—85. Author—Rāmānandasarasvati. Incomplete. Not printed.

**Beginning:**

श्री शिवाय नमो नमः ॥

श्रीरामभद्रसंयमि-
चरणौ शरणं विधाय बोधाय ।
सिद्धान्तचन्द्रिकामृत-
सेकैः संशोधयामि चेतस्त्वं ॥ १ ॥

श्रीगुरुकृपाकटाक्षात्
सारं शास्त्रस्य सकलमाकलयन् ।
सुकृती कृतीह कश्चि-
च्छ्रुतिसुखमित्थं जगौ मिथः सुहृदे ॥ २ ॥

चित्रमकृत्रिममेकं
ज्योतिर्निहितं गुहासु सङ्ख्यासु ।
तदुपरि किमपि तमिस्रं
त्रैलोक्यमहो विविच्य दर्शयति ॥ ३ ॥

**End:**

इत्थमशेषश्रुतिशिखरार्थं
विदुषाहितं मितं गदितम् ।
आकर्ण्य सपदि विगलित-
शोकः स सुखाऽसुखार्णवनिमग्नः ॥ ४९ ॥

इति सुखचिदात्मवस्तुनि
कुतुकाद्धातिमन्दमपि मया गीतम् ।
कलभाषितं शिशोरिव
कलयतु हर्षं सतामभीक्ष्णमिदम् ॥ ५० ॥

श्रीरामयतिमुखेन्दोः
शारदसमये गुरुप्रसादमये ।
सिद्धान्तचन्द्रिकाजनि
संभूय पिबन्तु सहृदयचकोराः ॥ ५१ ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दसरस्वतीतिलकश्रीरामभद्रभगवच्चरणारविन्दमकरन्दमन्दिर(श्रीमद्रामानन्दसरस्वती) विरचिता सिद्धान्तचन्द्रिका सम्पूर्णा।

Subject: Siddhāntacandrikā a poem giving the essence of Advaita Vedānta. 1-51 Ślokās.

Remarks:—The Ms. is in a fairly good condition. After the colophon is given a loose verse.

विश्वनाथ वृषारूढ मामुद्धर दयानिधे ।
सर्वदा शिव काशीश महेश मृड शङ्कर ॥

The author of this work seems to be a pupil of Rāmabhadrayamin who in his turn is the desciple of Ānanda Sarasvati and thus belongs to the end of the 17th century.

---

## ॥ सिद्धान्तचन्द्रिकाव्याख्या—उद्गारः ॥

## 7695. SIDDHĀNTACANDRIKĀVYĀKHYĀ—UDGĀRAḤ.

Burnell's Catalogue No. 6499. Page 96. Left column. Substance—Paper. Size—11 × 5½ inches. Sheets—25. Lines—10-14 to a Page. Script—Devanāgarī. No.

of Granthas—1000. Author—Gaṅgādhara Sarasvatī. Complete. Not printed.

Beginning:

श्रीगणाधिपतये नमः ॥

प्रणमदमरमौलिप्रस्फुरद्रत्नरश्मि-
प्रकरविमलदीपैर्नित्यनीराजिताङ्घ्रिः ।
शिशिरकिरणधारी योगिहृत्पद्मचारी
कृपयतु मयि साम्बः कोऽपि संवित्कदम्बः ॥ १ ॥

श्रीरामसंयमीन्दोः
सारां सिद्धान्तचन्द्रिकां प्रपिबन् ।
प्रथयति गङ्गाधरयति-
भव्यचकोरस्तदुद्गतोद्गारान् ॥ २ ॥

इह खलु बहुविधपरंपरार्जितसुकृतपरिपाकजनितविवेकवैराग्यादिसाधनमुमुक्ष्वभिलाषितमोक्षोपायब्रह्मात्मैक्य - ज्ञाननिदानं सर्ववेदान्तसिद्धान्तसारसंग्रहरूपं प्रकरणं चिकीर्षुः * *

अनुबन्धचतुष्टयं सूचयन् चिकीर्षितं प्रतिजानीते—
श्रीरामभद्रेति ।

॥ मूलम् ॥

श्रीरामभद्रसंयमि-
चरणौ शरणं विधाय बोधाय ।

सिद्धान्तचन्द्रिकामृत-
सेकैः संशोधयामि चेतस्त्वं ॥ १ ॥

॥ व्याख्या ॥ श्रीरत्र लक्ष्मीस्त्रयी च ।

End:

॥ मूलम् ॥

श्रीरामयतिमुखेन्दोः
शारदसमये गुरुप्रसादमये ।
सिद्धान्तचन्द्रिकाजनि
संभूय पिबन्तु सहृदयचकोराः ॥ ५१ ॥

॥ व्याख्या ॥ आदौ श्रीरामभद्रेति मध्ये गुरुमूर्तिमिति अन्ते गुरुप्रसादमय इति आदिमध्यावसानेषु गुरुस्मरणलक्षणं मङ्गलं ग्रन्थस्य प्रचयगमनाय अध्येतृश्रोतॄणामायुरभिवृद्धये परमपुरुषार्थसिद्धये च कृतमिति सर्वं शिवम् ।

निगुम्फेऽस्मिन् श्रीमद्गुरुचरणगंभीरवचसां
ममोत्सुक्यादेते कतिपयपदार्थाः प्रकटिताः ।
विचिन्वानोऽप्यन्तर्जलधिजठरं को नु कलयेत्
इयत्तां रत्नानां प्रचुरतरयत्नैरपि कृती ॥ १ ॥

महतामादरणीया मनसि मदीयापि कृतिरियं न कथम् ।
धुत्तूरकुसुममालां धत्ते न किमीश्वरोऽपि भक्तस्य ॥ २ ॥

क्व गभीरसूक्तिविभूतिः क्वाहं बालस्तथापि कृतिरेषा ।

श्रीगुरुसदयकटाक्षात्साहाय्याद्वरदराजविदुषश्च ॥

**Colophon:**

(मूलं) इति + श्रीमदानन्दसरस्वतीतिलकश्रीमद्रामभद्रभगवत्पूज्यपादपाथोजपादुकापरिचरणपरायणश्रीमद्रामानन्दसरस्वतीविरचिता वेदान्तसिद्धान्तचन्द्रिका संपूर्णा ।

(व्याख्या) इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्रामचन्द्रसरस्वतीपूज्यपादशिष्यश्रीगङ्गाधरसरस्वतीविरचितः सिद्धान्तचन्द्रिकोद्धारः संपूर्णः ।

Subject: Siddhāntacandrikāvyākhyā a commentary on Rāmānanda Sarasvatī's Siddhāntacandrikā with the text.

Remarks:—The Ms. is in good condition. The auther calls himself the desciple of Rāmacandra Sarasvatī. One Varadarāja is said to have helped the author in writing this work. There is a Transcript copy of this work in the library.

---

॥ ब्रह्मानन्दविलासः ॥

## 7696. BRAHMĀNANDAVILĀSAḤ.

Burnell's Catalogue No. 6859. Page Left column. Substance—Paper. Size—$5\frac{1}{4} \times 2\frac{3}{4}$ inches. Sheets—15. Lines—6 to a Page. Script—Devanāgarī. No. of Granthas—84. Author—Śāśvatānanda. Complete. Not Printed.

**Beginning:**

श्री शाश्वतानन्दब्रह्मणे नमः ॥

नत्वा गुरुवरचरणान्
नानामोहान्धकारखरकिरणान् ।
ब्रह्मानन्दविलासं
ब्रह्मवदीड्यं करोमि सोल्लासम् ॥ १ ॥

हित्वा दृश्यात्ममतिं
मत्वा प्रत्यञ्चमद्वितीयचितिम् ।
त्यक्त्वा विषयाभिरतिं
धृत्वोदास्ते मुनिः शिवात्ममतिम् ॥ २ ॥

निर्मूलितविषयाशाः
निस्त्रैगुण्यात्मरमणबद्धाशाः ।
शाटीभवद्दशाशाः
शान्ता भुवि शेरते गलत्पाशाः ॥ ३ ॥

End:

नाहं किञ्चिज्जाने
नानाभूतन्तु वस्तु बोधाब्धौ ।
चिदिहैकाकिन्यस्ति
श्रीकण्ठादिस्वरूपिणी सत्यम् ॥ ६२ ॥

करकलिततत्त्वमुद्रैः
कृतकनकन्यक्कुदीर्घितमनिद्रैः ।
करुणासुधासमुद्रैः
कर्मध्वस्तन्तु रामभद्रैर्नः ॥ ६३ ॥

**Colophon:**

इति श्रीमत्परमहंसशाश्वतानन्दस्वामिविरचितो ब्रह्मानन्दविलासः

सम्पूर्णः ॥

Subject: Brahmānandavilāsa.

**Remarks** :—The Ms. is in good condition.

The author of this poem, is one Śāśvatānanda, pupil of Rāmabhadrasamyamin, among whose numerous pupils, many an author is recorded in this volume. The author flourished in the 18th century. The work resembles the Ātmavidyāvilāsa of Sadāśivabrahman.

---

## ॥ बोधप्रक्रिया ॥

## 7697. BODHAPRAKRIYĀ.

J. L. Collection No. 985.

Substance—Paper. Size—6¼ × 4 inches. Sheets—9. Lines—12 to a Page. Script—Devanāgarī. No. of Granthas—75. Author—? Complete. Not printed.

**Beginning :**

पूर्णं ब्रह्म विशुद्धमद्वयमजं सच्चित्सुखैकात्मकं
साम्येनात्मगतात्मचिच्युततया संप्राप्तवत्पौरुषम् ।
तं दत्तं गुरुमीश्वरं च जगतां नित्यं नमामो वयं
यद्वाक्यामृतपानतो ह्यमृतता सुज्ञैर्जनैर्लभ्यते ॥ १ ॥

पूर्वं गुरुप्रसादादिग्रन्थेषु ब्रह्मप्रकृतिजीवेश्वरोपक्रम-संहारबन्धमोक्षरूपाणि विस्तरशो(तो)ऽभिहितानि । विना-

यैन ब्रह्मात्मविज्ञाने निश्चय उपजायते । प्रीतिश्च । तथापि न बालप्रज्ञैः समग्रत्वेनावमन्तुं शक्यानि ॥

End:

यथाकारणोपाधिः विवर्तरूपस्तथा कार्योपाश्रयोऽपि । तस्मात्स औपाधिकोऽपि भेदः विवर्तरूप एव । तेनाभि ...न दृष्टया वर्तमानोऽपि न किंचित् । तस्मात् तत्परं ब्रह्म सर्वाकारनिराकारं निर्गुणं निर्विकल्पं निजाकाराद्दृष्टं यथावदेवास्त्यत एवोच्यते "नेह नानास्ति किंचन" इति ।

**Colophon:**

बोधप्रक्रियायां जीवेश्वरविवरणं प्रथमम् ॥

Subject: Bodhaprakriyā, I Chapter only.

**Remarks:**—The Ms. is in a fairly good condition.

The author of this work whose name is not known, seems to have written many works, of which Guruprasāda is one.

---

## ॥ सच्चिदानन्दभुजङ्गम् ॥

## 6798. SACCIDĀNANDABHUJAṄGAM.

**Burnell's Catalogue No.** 8580.

Substance—Paper. Size—6¾ × 4 inches. Sheets—12. Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—72. Author—? Complete. Not Printed.

Beginning:

श्री गणेशाय नमः ।

यतस्तत्त्वमस्यादिवाक्योपदेशै-

स्सदा सच्चिदानन्दभावो विभाति ।

स आचार्यवर्यस्स देवास्समस्ता

गिरस्तस्य वेदाः पदादेवगङ्गा ॥ १ ॥

प्रबोधान्तवेदान्तयोगान्तपूर्वैः

कलान्ताख्यनादान्तसिद्धान्तवादैः ।

चिदानन्दमेकं वदन्त्यात्मनिष्ठा-

स्स सिद्धो न चेत्किं फलं तैश्च वादैः ॥ २ ॥

क्व जीवस्य वार्ता क्व वा कोशवार्ता

क्व भूतानि वेधोमुखा देवताः क्व ।

क्व कैलासवैकुण्ठसत्यादिलोकाः

चिदानन्द एकस्सदाचार्यलक्ष्यः ॥ ३ ॥

चिदानन्दभावे सदाचार्यबुद्धे

कुतोऽष्टौ च सिद्धिः कुतो लोकभेदान् ।

कुतो देवसारूप्यलाभादि कांक्षे-

यदेतत्समस्तं सदोपाधियुक्तम् ॥ ४ ॥

End:

निधिप्राप्तितस्सर्वसाम्राज्यलाभा-

न्निजेषागमाद्वा मनःप्रीतिरस्ति ।

अमुष्यानुभूत्या सुखस्यामृताभिः
तथा सिद्धयो नित्यतृप्तिश्च भूयात् ॥ ४५ ॥

चिदा सच्चिदानन्दसंज्ञं भुजङ्ग-
प्रयातं पठेद्यस्तु वेदान्तसारम् ।
स दीर्घायुरारोग्यमैश्वर्यमेति
..... ............ ... ॥

Colophon:

पिङ्गलनामसंवत्सरग्रीष्मऋतौ ज्येष्ठमासे कृष्णपक्षे एकादश्यां रविवारे अश्विनीनक्षत्रे इदं पुस्तकं लिखितम् ॥

श्रीरस्तु । शुभमस्तु । श्रीसरस्वत्यै नमः ॥

Subject: Saccidānandabhujaṅgam, 1-46 Ślokas. A short treatise, dealing with 'Sat', 'Cid', and 'Ānanda', in Bhujaṅgaprayāta metre.

Remarks:—The Ms. is in a fairly good condition. The Ms. is dated 1757 A. D.

---

॥ श्रुतिस्मृतिसंग्रहः ॥

## 7699. ŚRUTISMṚTISAṄGRAHAḤ.

Burnell's Catalogue No. 9718 *. Page 29. Right column.

**Substance**—Palm leaf. Size—15¾ × 1½ inches. Leaves—4 (14-17). Lines—7 to a Page. Script—Telugu. No. of Granthas—70. Author—? Incomplete, wants beginning. Not printed.

**Beginning**:

"तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "परीक्ष्य लोकान् कर्मजितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।"

श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्यति सर्वं पश्यन्। तदिहाभ्युक्तां "सत्यं ज्ञानम(म)नन्तं ब्रह्म"। "नित्यं विज्ञानमानन्दं ब्रह्म"। "प्रज्ञानं ब्रह्म"। "अयमात्मा ब्रह्म"। "सोऽयमात्मा ब्रह्म"। "यदेव साक्षादपरोक्षं ब्रह्म"। "य आत्मा सर्वान्तरः। तस्मै व्याचक्षत्येष त आत्मा सर्वान्तरः"।

End:

'तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः'। 'तरति शोकमात्मवित्' 'श्रद्धा स्वसा........नि अभयं वै जनक प्राप्तोऽसि'

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति॥

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

श्रुतिस्मृतिपुराणेभ्योऽयमर्थोऽवसीयते।

ओं तत्॥

Subject: Śrutismṛtisaṅgraha—a citation of Vedāntaśrutis and Smṛtis at one place. This work consists of

profuse quotations from Śrutis and Smṛtis.

Remarks:—The Ms. is in a fairly good condition. For the other works contained herein see remarks under No. 983. (Vol. II)

---

## ॥ पञ्चीकरणभूतोपसंहारः ॥

## 7700. PAÑCĪKARAṆABHŪTOPASAMHĀRAḤ.

Burnell's Catalogue No. 6490 c. Page 97. Left column. Substance—Paper. Size—8¼ × 4⅛ inches. Sheet—1 (28). Lines—9 to a Page. Script—Devanāgarī. No. of Granthas—90. Author—? Complete. Not printed.

पृथ्व्यां भूतानि लीयन्ते पृथिव्यप्सु प्रलीयते ।
पयः प्रलीयते वह्नौ ज्योतिर्वायौ प्रलीयते ॥ १ ॥

वायुः प्रलीयते व्योम्न्यहंकारे व्योम लीयते ।
लीयतेऽहं महत्तत्त्वे तदव्यक्ते प्रलीयते ॥ २ ॥

अव्यक्तं पुरुषे ब्रह्म निष्कलं संप्रलीयते ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ ३ ॥

शब्दाद्व्योम स्पर्शतस्तेन वायु-
स्ताभ्यां रूपं वह्निरेते रसाश्च ।
अम्भो ह्येभिः गन्धतो भूपराद्याः
भूताः पञ्च स्युर्गुणानां क्रमेण ॥ १ ॥

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ २ ॥

को देवो यो मनस्साक्षी मनो मे दृश्यते मया ।
तर्हि देवस्त्वमेकोऽसि एको देव इति श्रुतेः ॥ ३ ॥

जाग्रत्स्वप्नसुषुप्तीनां साक्षी कूटस्थचिन्मयः ।
अहमस्मि परं ब्रह्म सच्चिदानन्दमद्वयम् ॥ ४ ॥

स्वबोधगलिताबोधतद्भूतजगद्भवम् (?) ।
सदानन्दघनाद्वैतवरं ब्रह्मास्मि निर्भयः ॥ ५ ॥

अहंकारादिदेहान्तो वेद्यो नाम्ना घटादिवत् ।
तत्साक्षी सर्वगो ज्योतिरात्मा त्वंपदलक्षितम् ॥ ६ ॥

सदेव सोम्येदमग्र आसीदिति श्रुतेः ।

**Colophon:**

इति पञ्चीकरणभूतसंहारः पूर्णानन्दार्पणमस्तु ।
नरसिंहभट्टस्येदं पुस्तकम् । पुष्पग्रामस्थ भीमसेनेन लिखितम् ।

Subject: Pañcīkaraṇabhūtopasaṃhāra.

Remarks:—The Ms. is in a fairly good condition. The other works contained herein are (1) Adhyātmavidyopadeśavidhi, (2) Pañcīkaraṇa.

---

## ॥ पञ्चब्रह्माख्यविवरणम् ॥

## 7701. PAÑCABRAHMĀKHYAVIVARAṆAM.

**Burnell's Catalogue No. 6480 c. Page 208. Right column.**

**Substance—Paper. Size—8 × 4¾ inches. Sheets—6-9. Lines—9 to a Page. Script—Devanāgarī. No. of Gran-**

thas—60. Author—Līlānanda. Complete. Not printed.

**Beginning:**

श्री गणाधिपतये नमः ।

....आत्मानन्दनाथगुर(वे) बोधरूपिणे ।
नमस्कृत्वा[थ] प्रवक्ष्यामि पञ्चब्रह्मविवर्णनम् ॥ १ ॥
तारकं दण्डकञ्चैव कुण्डल्य(ली अ)र्धचन्द्रकम् ।
पञ्चमं बिन्दुसङ्काशं पञ्चब्रह्म सनातनम् ॥ २ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
पञ्चदेवता विख्याता(?) पञ्चब्रह्मस्वरूपवान् ॥ ३ ॥

End:

त्वन्तद्गुह्यं परं गोप्यं गुह्यात्गुह्यं सनातनम् ।
पठनात्पाठनाद्वापि श्रवणान्मननादिभिः ।
पूजयेत्पुस्तकं नित्यं सर्वकामफलं लभेत् ॥ ५५ ॥
इत्येवं शम्भुनाथे(ते)न कथितं उमया प्रति ।
स्वात्मानन्दप्रसादेन लीलानन्देन भाषितम् ॥ ५६ ॥

**Colophon:**

इति श्रीतारकब्रह्मराममन्त्रग्रन्थाभ्यन्तरे पञ्चब्रह्माख्याविवरणं सम्पूर्णम् ॥

Subject: Pañcabrahmākhyavivaraṇam—an extract from a treatise called Tārakabrahmarāmamantra.

Remarks:—The Ms. is in good condition.

The other works contained herein are (1) Hṛdayaguhya and

(2) Pañcabrahmatattvam. The author is the desciple of one Svātmānanda.

---

॥ तत्त्वार्थप्रकरणम् ॥

## 7702. TATTVĀRTHAPRAKARAṆAM.

P. A. Collection No. 76 a.

Substance—Paper. Size—7½ × 4 inches. Sheets—6. Lines—8 to a Page. Script—Devanāgarī. No. of Granthas—60. Author—? Incomplete. Not Printed.

**Beginning:**

श्री रामः कर्ता ॥

तत्त्वार्थप्रकरणं लिख्यते ।

प्रत्यगात्मा परंज्योतिः परमानन्दचिद्धनः ।
अहं नाहं न देहादि शिवोऽनन्तोऽहमद्वयः ॥ १ ॥

न स्त्री न षण्डो न पुमान्जडो नाहं मृषात्मकः ।
व्यक्तं नाहं न चाऽव्यक्तम् तदाधारोऽहमद्वयः ॥ २ ॥

**End:**

कः सम्बन्धः शुक्तिकादेरध्यस्तरजतादिना ।
असता जगता को मे सम्बन्धः स्यात्सतस्तथा ॥ ६० ॥

शर्कि विना महासिन्धौ पतन्तो वर्षबिन्दवः ।
न मुक्ताफलतां यान्ति यथा तत्पतनं वृथा ॥ ६१ ॥

Subject: Tattvārthaprakaraṇam; 61 verses only.

**Remarks:**—The Ms. is in a fairly good condition. The other

work contained herein is—

'स्वरूपानुभवम्'

---

## ॥ वेदान्तविषयकश्लोकसंग्रहः ॥

## 7703. VEDĀNTAVIṢAYAKAŚLOKA-SAṄGRAHAḤ.

Burnell's Catalogue No. 9667 a. Page 91. Left column.

Substance—Palm leaf. Size—17 × 1¼ inches. Leaves—7. Lines—4 to a Page. Script—Grantha. No. of Granthas —60. Complete. Printed.

Beginning:

कच्चित्कल्याणकारिण्यस्संविदस्ते स्थिरा पदे ।
कच्चित्तपस्ते निर्विघ्नं कल्याणमनुवर्तते ॥

End:

ज्ञानेन्द्रियाणि खलु पञ्च तथापराणि
कर्मेन्द्रियाणि मन आदि चतुष्टयञ्च ।
प्राणादिपञ्चक...वियदादिकञ्च
कामश्च कर्म च तमः पुनरष्टमीयुः (?) ॥

Subject: Vedāntaviṣayakaślokasaṅgraha. A collection of verses dealing with philosophy from the रामायण, and other works.

Remarks:—The Ms. is in a decaying condition. For the other works contained herein see remarks under No. 7457.

---

## ॥ शुकाष्टकम् ॥

## 7704. ŚUKĀṢṬAKAM.

Burnell's Catalogue No. 9858 b. Page 93. Right column. Substance—Palm leaf. Size—$11\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves - 2 (1-2) at the end. Lines—7 to a Page. Script—Grantha. No. of Granthas—20. Author—Śuka Complete. Printed.

**Beginning:**

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे
मायामोहौ क्षयमधिगतौ नष्टसन्देहवृत्तिः ।
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ १ ॥

End:

सत्यं सत्यं परममसृतं शान्तिकल्याणरूपं
मायारण्ये दहनमलिनं शान्तिकल्याणदीपम् ।
तेजोरूपं निगमसदृशं व्यासपुत्राष्टकं यः
प्रातः काले पठति मनसा याति निर्वाणमार्गम् ॥ ९ ॥

**Colophon:**

शुकाष्टकं समाप्तम् ॥

Subject. Sukāṣṭaka. An ideal Vedantic poem.

**Remarks:**—The Ms. is in a good condition. For the other work contained herein see remarks under No. 7137.

This work is published at Madras in 1921 with a foreword by K. S. Ramaswami Sastri as appendix II of the Edition of an English Translation of Dattātreya's Avadhūta Gītā.

---

## ŚUKĀṢṬAKA.

| Descriptive No. | Collection No. | Substance. | Size inches. | No. of Sheets or leaves. | No. of Lines per Page or sheet. | Script. | Complete or otherwise. |
|---|---|---|---|---|---|---|---|
| 7705 | B. L. 8487 | Paper. | $5\frac{1}{4} \times 2\frac{7}{8}$ | 3 | 6 | Devanāgarī. | Complete. |
| 7706 | „ 8937 | „ | $8\frac{1}{2} \times 9\frac{3}{4}$ | 1 | 20 | „ | „ |
| 7707 Not noticed by Burnell | No. 12350 | „ | $15\frac{1}{2} \times 4\frac{1}{4}$ | 1 | 84 | „ | „ |
| 7708 | „ 12651 | „ | $5\frac{7}{8} \times 3\frac{3}{4}$ | 2 | 10 | „ | „ |
| 7709 | „ 12652 | „ | $6\frac{1}{2} \times 4\frac{1}{8}$ | 2 | 8 | „ | „ |
| 7710 | „ 12653 | „ | $9\frac{1}{2} \times 4$ | 2 | 8 | „ | „ |
| 7711 | „ 12661 | „ | $4\frac{1}{2} \times 2\frac{7}{8}$ | 4 | 6 | „ | „ |
| 7712 | „ 12663 | „ | $5\frac{3}{4} \times 3\frac{1}{4}$ | 2 | 8 | „ | „ |
| 7713 | „ 12714 | „ | $10 \times 3\frac{7}{8}$ | 1 | 21 | „ | „ |
| 7714 | „ 13685 | „ | $6 \times 3\frac{1}{4}$ | 4 | 5 | „ | „ |
| 7715 | „ 15566 j. | Palm leaf. | $15\frac{3}{4} \times 1\frac{1}{2}$ | 1 (48th) | 6 | Telugu. | „ |
| 7716 | P. A. 87 | Paper. | $8 \times 4$ | 2 (1 & 8) | 6 | Devanāgarī. | Incomplete. |

## DETAILED REMARKS

on the

## ŚUKĀṢṬAKA MSS.

IN THE ABOVE TABLE.

7705 & 7710 The following additional verse is given at the end:—

सत्यं सत्यं परममममृतं सर्वकल्याणहेतुं
मायाविद्यागगनदहनं शान्तिनिर्वाणदीपम् ।
नित्यं भक्त्या निगमसदृशं व्यासपुत्राष्टकं यः
प्रातःकाले पठति मनसा ब्रह्मनिर्वाणमीयात् ॥

7710 On the title page is given—

" बाबाजीनायकपुण्डे ॥"

7711 On the title page is given—

' तुळजाराजस्येदम् ॥ '

7715 For the other works contained herein see remarks under No. 7277.

7716 The text is followed by a Mahraṭhi commentary.

---

## ॥ पञ्चकोशविवेकः ॥

## 7717. PAÑCAKOŚAVIVEKAḤ.

P. A. Collection No. 113.

Substance—Paper. Size—$8\frac{3}{16} \times 4\frac{1}{16}$ inches. Sheets—4. Lines—7 to a page. Script—Devanāgarī. No. of

Granthas—45. Author—Bhāratītīrtha Vidyāraṇya ?
Complete. Not printed.

Beginning:

श्रीगणेशाय नमः ॥

गुहाहितं ब्रह्म यत्तत्पञ्चकोशविवेकतः ।
बोद्धुं शक्यं ततः कोशपञ्चकं प्रविविच्यते ॥ १ ॥

End:

य एवं ब्रह्म वेदैषः ब्रह्मैव भवति स्वयम् ।
ब्रह्मणो नास्ति जन्मातः पुनरेष न जायते ॥ ४२ ॥

**Colophon:**

इति पञ्चकोशविवेकः समाप्तः ॥ श्रीरस्तु ॥

Subject: Pañcakośavivekaḥ.

Remarks:—The Ms. is in a fairly good condition. After the colophon is given the following verse:—

स्थूलारुन्धतिकान्यायात्पञ्चकोशप्रदर्शनम् ।
कालव्याधेन नष्टत्वात्पक्षिरूपत्वमुच्यते ॥

Rāmakṛṣṇa has written a commentary for this work called Pañcakośavivekavyākhyā. This Rāmakṛṣṇa is the desciple of the famous Vidyāraṇya and commented upon almost all the works of his Guru. Considering the fact that barring his original works the others are commentaries on his Guru's works it may be nearer truth if we say that this work also for which he wrote a commentary might have been written by his guru. About the duality or identity of Bhāratītīrtha and Vidyāraṇya vide remarks under No. 7864.

## ॥ पञ्चकोशविवेकः ॥

## 7718. PAÑCAKOŚAVIVEKAḤ.

P. A. Collection No. 112.

Substance—Paper. Size—$8\frac{1}{8} \times 4\frac{1}{16}$ inches. Sheets—5. Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—45. Author—Bhāratītīrthavidyāraṇya ? Complete. Not Printed.

Beginning, end, colophon and subject—Same as No. **7717**.

Remarks:—The Ms. is in a good condition.

After the colophon is given—

स्थूलारुन्धतिकान्यायात् + पञ्चिरूपत्वमुच्यते ॥

---

## ॥ आनन्दब्रह्मलक्षणम् ॥

## 7719. ĀNANDABRAHMALAKṢAṆAM.

Not noticed by Dr. Burnell. Ms No. 15572.

Substance—Paper. Size—$6\frac{1}{2} \times 4\frac{3}{4}$ inches. Sheets—6. Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—44. Author—? Complete. Not Printed.

Beginning:

॥ मू ॥ श्रीगुरून् परमानन्दस्वरूपानभिवादये ।

तापत्रयापहा येषां कृपा ब्रह्मामृतप्रपा ॥ १ ॥

सद्गुरुबोधचन्द्र उदेला सद्वस्तुची प्राप्तिकरणार त्याचा

बोध चन्द्रज्ञानलक्षण चन्द्रोदय जाहला बोध चिद्ग्रन्थिक्षय समई ॥

मू ॥ श्लोक ॥

तारकस्योपदेशेन गुरुर्भूत्वा विमुक्तिदः ।
काश्यामपीश्वरस्तस्मादीश्वरादधिको गुरुः ॥ १ ॥

ईश्वरस्सर्वहेतुत्वात् हेतुस्संसारमोक्षयोः ।
मोक्षस्यैव गुरुस्तस्मान्नास्ति तत्त्वं गुरोः परम् ॥ २ ॥

क्षम्यतामिति किं वाच्यं प्रसीदेति किमुच्यताम् ।
क्षमाप्रसादसम्पूर्णः स्वभावादेव मे गुरुः ॥ ३ ॥

End:

मू ॥ सा मतातिप्रमाणेच्छा या त्वरा स्त्रीषु दृश्यते ।
भर्तारमनुयान्तीषु विच्छिन्नाशा सुतादिषु ॥

प्रकाशकस्तथाप्यर्कः प्रकाश्यं पद्ममेव हि ।
तथा गुरूणां वचनैः जिज्ञासुर्बोधमञ्चति ॥ २४ ॥

उक्तप्रकारमुमुक्षुचकोरांस तन्मय बोध जाहला ध्या-
नामृत सेउनि चित्कला ॥

श्लोक ॥

निरन्तरचित्तस्य प्रवाहो ध्येयस्य ध्यानमीरितम् ।
ध्यानामृतचित्कला सत् आनन्दब्रह्मलक्षणे ॥

Subject: Ānandabrahmalakṣaṇa, a short Vedāntic treatise in 22 ślokas, some of which are quotations. The

text is followed by a Mahrathi gloss here and there.

Remarks:—The Ms. is in good condition.

---

## ॥ पञ्चीकरणम् ॥

## 7720. PAÑCĪKARAṆAM.

P. A. Collection No. 20.

Substance—Paper. Size—7 × 5½ inches. Sheets—3 (20-22). Lines—12-14 to a Page. Script—Devanāgarī. No. of Granthas—55. Author—? Complete. Not printed.

अथ पञ्चीकरणप्रारम्भः ॥ पृथिव्यापस्तेजो वायुराकाश इति भूतपञ्चकः । प्राणापानव्यानोदानसमाना इति प्राणपञ्चकः । श्रोत्रं त्वक्चक्षुर्जिह्वा घ्राण इति ज्ञानेन्द्रियपञ्चकः । वाक्पाणिपादपायूपस्था इति कर्मेन्द्रियपञ्चकः । मनोबुद्धिचित्ताहंकारप्रकृतयः इति अन्तःकरणपञ्चकः । शब्दस्पर्शरूपरसगन्धा इति विषयपञ्चकः । नागकूर्मकृकरदेवदत्तधनंजया इति उपप्राणपञ्चकः । महत्तत्व इति षट्त्रिंशः ॥

अस्थिचरम(र्म)नखमांसरोम इति पृथ्व्यंशः । रक्तमूत्रशुक्लमज्जाश्लेष्म(इति)जलांशकः । क्षुधातृषानिद्रालस्यमैथुन इति तेजोंशकः । धावनं चलनं कम्पनं आकुञ्चनं निरोधन-

मिति वाय्वंशकः। कामक्रोधमोहलोभभय व्योमांशकः। इति पञ्चभूतांशकः॥

जीवात्म चञ्चलात्म निर्मलात्म ज्ञानात्म भूतात्म महात्म महाभूतात्म परमात्म इति अष्टात्मकः। स्थूल सूक्ष्म कारण महाकारण कैवल्यमानन्दाचिन्मय चिद्रूप इत्यष्टतनुः। संकृत तृणीकृत वर्तनी क्रोधिनी मोहिनी अतिचारिणी गन्धचारिणी वासिनीत्यष्टशक्तिः।

ग्रहणशङ्का भय लज्जा जुगुप्सा जाति वृत्तशीलानीति अष्टपाशः।

कुलं च वर्धनं चैव रूपयौवनमेव च।
विद्याराजतपश्चैव मदाष्टं च प्रकीर्तितम्॥

पृथिवीपञ्च पयःपञ्च तेजःपञ्च वायुपञ्च आकाशपञ्च अविद्याकामकर्म इति पुराष्टकः। नख रुधिर मांस त्वक् शुक्ल मेदः मज्जा इति सप्तधातुः।

तनुर्धनधनं चैव राज उत्सवशेवकः।
विश्वास इति च प्रोक्ता सत्यव्यसनईरिताः॥

कामः क्रोधश्च लोभश्च मोहश्च मरणं परः।
वैरिवर्ग इह प्रोक्तः सर्वदेहसमाश्रितः॥

क्षुत्पिपासाशोकमोहजरामरण इति षडूर्मि(र्मयः)। अस्ति जायते वर्धते विपरिणमते अपक्षीयते विनश्यतीति षड्भाव-

विकाराः । मधुराम्लतिक्तकटुकषायलवण इति षड्रसाः ॥ अविद्या विस्मृति राग द्वेष अभिन्यसनमिति क्लेशपञ्चकः । अन्नमय प्राणमय मनोमय विज्ञानमयानन्दमय इति कोश-पञ्चकः ॥ नित्यानित्यवस्तुविवेक इहामुत्रफलभोगविराग शमदमादिसाधन मुमुक्षुत्वमिति साधनचतुष्टयः । परा पश्यन्ती मध्यमा वैखरी (इति) वाकचतुष्टयः। अण्डज स्वेदज जरायुजोद्भिज्ज इति उत्पत्तिचतुष्टयः । ब्रह्मादिवर्ण-चतुष्टयः । धर्मार्थकाममोक्षपुरुषार्थचतुष्टयः॥ सत्त्वरजस्तम इति गुणत्रयः । राजसतामससात्त्विकाहंकारास्त्रयः । आ-ध्यात्मिकाधिभौतिकाधिदैविक तापत्रयः । जाग्रत्स्वप्नसु-षुप्तित्रयः । विश्व तैजस प्राज्ञ अभिमानत्रयः । कायिक वाचिक मानसिक कायत्रयः । व पुष्पत न वर्तन मोहन भावत्रयः । संचित प्रारब्धागामि कर्मत्रयः । ज्ञातृ ज्ञान ज्ञेय ध्यातृ ध्यान ध्येय कर्तृ कर्म क्रिया इति त्रिपुटिः । ........................मलत्रयः । तनुमनधनत्रयः । जी-वात्म परमात्म अन्तरात्मा त्रयः । नारीधनमूर्तिकार्ष्यत्रयः। वात पित्त श्लेष्मा दोषत्रयः । यमनियमासनाद्यष्टाङ्ग-योगः । उदराग्नि मन्दाग्नि शोकाग्नि वडवाग्नि दा-वाग्नि इति अग्निपञ्चकः । सुखईण सुविचार निस्सं-गज्ञानाढ्य सुखानन्द तुर्य तुर्यातीत सप्तभूमिकाः । षड्विं-शमयः स्थूलतनुः । चित्ताहंकारकारणतनुः । इन्द्रियदशक

वायुपञ्चक मनोबुद्धि सप्तदश सूक्ष्मतनुः । अस्य व्यक्तान्वयः । पृथ्व्यापद्वयं स्थूलतनुः । अग्निवायुद्वयं सूक्ष्मतनुः । आकाशं कारणतनुः । इति पञ्चीकरणम् ॥ षड्विंशत्तत्वविवरणम् । स्थूल सूक्ष्म कारण महाकारण कैवल्य इति पञ्चदेहः । तारकदंडक................... । ब्रह्म विष्णु रुद्र ईश्वर सदाशिवः इति पञ्चब्रह्म । अकार उकार मकार इकार ओंकार इति पञ्चमात्राः । वैखरी मध्यमा पश्यन्ती परा परात्परा पञ्चवाचः । अधश्शून्य मध्यशून्य निरामय महाशून्य इति शून्यपञ्चकः । ऋग्वेद यजुर्वेद सामवेदाथर्वणवेद सूक्ष्मवेद (इति) वेदपञ्चकः । रजस्तमस्सत्त्व शुद्धसत्त्व निर्गुण पञ्चगुणाः । प्रथम द्वितीय तृतीय चतुर्थ पञ्चमा पञ्चपदा गायत्री । सृजनपालनसंहारक्रिया....चन्द्रक्रिया क्रियापञ्चकः । पूर्वदक्षिण पश्चिमोत्तर ऊर्ध्व पञ्चदिशः । भूतकोण शम्भुकोण अग्निकोण वायुकोण अधःकोण पञ्चकोणाः । सद्योजात वामदेव(अघोर) तत्पुरुष ईशान पञ्चमुखः । अभ्रूहस्तपर्व अर्धपर्व...प्रमाणपञ्चकः । ह्रस्व दीर्घ प्लुत अर्ध असर(?)मात्रापञ्चकः । पीत रक्त श्वेत नील कृष्ण पञ्चवर्णाः । भूचरी खेचरी चाचरी अगोचरी उपरी पञ्चमुद्राः । रौवीकृता(?) उर्वीकृता योगीकृता ज्वालाकृता कृतातीत(?) इति पञ्चकृताः ॥ पिपीलिका विहङ्ग कपि

मीन शेष पञ्चमार्गाः । पटाकाश मठाकाश महाकाश चिदाकाश निराकाश इत्याकाशपञ्चकः। सत्य वैकुण्ठ कैलास आश्रय निराश्रय पंचलोकः । विश्व तैजस प्राज्ञ प्रत्यगानन्द निरंजन पञ्चाभियातिः । तन्तु वितन्तु घन सुस्वर अनाहत पञ्चवाद्याः । विष्णुरविगणेशेश शक्ति इति पञ्चायतनः । इच्छाशक्ति ज्ञानशक्ति क्रिया-शक्ति पराशक्ति आदिशक्ति पञ्चशक्तिः । क्षर अक्षर कूटस्थ क्षेत्रज्ञ आत्मा पञ्चविकारः । नित्यानन्द योगा-नन्द अद्वैतानन्द विदेहानन्द ब्रह्मानन्द पञ्चानन्दः । अहं कोऽहं शिवोऽहं अनामयोऽहं...पञ्चदीक्षा ।

Colophon:

इति पञ्चीकरण(म्)समाप्ता(प्तम्) ॥

Remarks:—The Ms. is in good condition.

---

## ॥ महावाक्यविवेकः ॥

## 7721. MAHĀVĀKYAVIVEKAḤ.

Burnell's Catalogue No. 9722 m.

**Substance**— Palm leaf. Size—$16\frac{1}{2} \times 1\frac{1}{2}$ **inches**. Leaf—1 (19th). Lines—7 to a Page. Script—Grantha. No. of Granthas—10. Author—? Complete. Printed.

येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥ १ ॥

चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ २ ॥

परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणि ।
बुद्धेस्साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ ३ ॥

स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः ।
अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥ ४ ॥

एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।
सृष्टेः पुराधुनाऽप्यस्य तादृक्त्वं तदितीर्यते ॥ ५ ॥

श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् ।
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ ६ ॥

स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ।
अहंकारादि देहान्तात्प्रत्यगात्मेति गीयते ॥ ७ ॥

दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ।
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ८ ॥

**Colophon**:

इति श्रीमहावाक्यविवेकः समाप्तः ।

Subject: Mahāvākyaviveka 8 verses.

Remarks:—The Ms. is in good condition.

After the colophon is given the verse:—

हृदयकमलमध्ये दीपवद्वेदसारं
प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् ।

हरिगुरुशिवयोगं सर्वभूतस्थमेकं

सकृदपि मनसा मां ध्यायते यस्स मुक्तः ॥

This is a portion of the Pañcadaśī written by Vidyāraṇya (No. 7421). Nos. 7341, 7342, 7343, 7344 & 7159, whether called Aṣṭaślokī or Mahāvākyaviveka are all identical with this, though wrongly ascribed in the Mss. as Śaṅkarā's, work.

---

## ॥ महावाक्यविवेकव्याख्या—दीपिका ॥

## 7722. MAHĀVĀKYAVIVEKAVYĀKHYĀ—DĪPIKĀ.

S. S. Collection No. 44.

Substance—Paper. Size—$7\frac{1}{8} \times 4\frac{3}{8}$ inches. Sheets—6. Lines—9 to a Page. Script—Devanāgarī. No. of Granthas—75. Author—Rāmakṛṣṇa. Complete. Printed.

श्री गणेश्वरद्गुरुभ्यां नमः ॥

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।

महावाक्यविवेकस्य कुर्वे व्याख्यां समासतः ॥

मुमुक्षोर्मोक्षसाधनब्रह्मात्मैकत्वसिद्धये प्रसिद्धानां चतुर्णां महावाक्यानां अर्थं क्रमेण निरूपयिष्यन् परमकृपालुराचार्यः आदौ तावदैतरेयारण्यकगतस्य 'प्रज्ञानं ब्रह्म' इति महावाक्यस्यार्थमाह ।

येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदाहृतम् ॥

इति । येन चक्षुर्द्वारा निर्गतान्तःकरणवृत्त्युपहितचैतन्येन इदं दर्शनयोग्यं रूपादिकमीक्षते पश्यति पुरुषः । तथा श्रोत्रद्वारा निर्गतान्तःकरणवृत्त्युपाधिकेन येन चैतन्येन शब्दजातं शृणोति । तथैव घ्राणद्वारा निर्गतान्तःकरणवृत्त्युपाधिकेन चैतन्येन गन्धजातं जिघ्रति । वागिन्द्रियावच्छिन्नेन व्याकरोति शब्दजातं व्याहरति । येन च रसनेन्द्रियद्वारा निर्गतान्तःकरणवृत्त्युपहितेन स्वाद्वस्वादु विजानाति । अनुक्तसमुच्चयार्थः चशब्दः । तथा चोक्तानुक्तैः सकलेन्द्रियैः अन्तःकरणवृत्तिभेदैश्च उपलक्षितं यच्चैतन्यमस्ति तदेवात्र प्रज्ञानमुच्यत इत्यर्थः । अनेन येन वा पश्यतीत्यादेः सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्तीत्यस्यावान्तरवाक्यार्थः संक्षिप्य दर्शितः । तत्त्वं प्रज्ञानशब्दार्थं अभिधाय ब्रह्मशब्दार्थमाह ।

चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥

उत्तमेषु देवादिषु मध्यमेषु मनुष्येषु अधमेषु अश्वगवादिषु देहधारिषु आकाशादिभूतेषु च जगज्जन्मादिहेतुभूतं यच्चैतन्यमास्ति तद्ब्रह्मशब्देनेर्यते । अनेनैव ब्रह्मैव इन्द्रः

इत्यादेः प्रज्ञा प्रतिष्ठेत्यन्तस्य अवान्तरवाक्यस्यार्थः संक्षिप्य दर्शितः । इत्थं पदार्थमभिधाय वाक्यार्थज्ञानमाह । अतः प्रज्ञानं ब्रह्म मय्यपि इति । यतस्सर्वत्रावस्थितं प्रज्ञानसंज्ञितं चैतन्यं ब्रह्म अतो मय्यवस्थितं प्रज्ञाचैतन्यं ब्रह्मैव प्रज्ञानत्वाविशेषादित्यर्थः ॥

एवमृक्शाखागतमहावाक्यार्थं निरूप्य यजुःशाखासु मध्ये बृहदारण्यकोपानिषद्गतस्य 'अहं ब्रह्मास्मि' इति महावाक्यस्यार्थाविष्करणाय अहंशब्दार्थमाह—

संपूर्णः परमात्मास्मिन्देहे विद्याधिकारिणि ।
बुद्धिसाक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥

इति । परिपूर्णः स्वभावतो देशकालवस्तुभिरपरिच्छिन्नः परमात्मा अस्मिन् मायाकल्पिते जगति विद्याधिकारिणि शमादिसंभवेन विद्यासंपादनयोग्येऽस्मिन् श्रवणाद्यनुष्ठानवति देहे मनुष्यशरीरे बुद्धेः बुद्ध्युपलक्षितस्य सूक्ष्मशरीरस्य साक्षितया अविकारित्वेनावभासकतया स्थित्वा अवस्थाय स्फुरन् प्रकाशमानः अहमितीर्यते लक्षणया अहंपदेनोच्यत इत्यर्थः । ब्रह्मशब्दार्थमाह—

स्वतः पूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः ।
अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥

इति । स्वतः पूर्णः स्वभावतो देशकालाद्यनवच्छिन्नः

पूर्वोक्तः परमात्मात्रास्मिन्महावाक्ये ब्रह्मशब्देन ब्रह्मेत्य-नेन पदेन वर्णितः लक्षणयोक्तः इत्यर्थः । तद्वाक्यगतेना-सिपदेन सामानाधिकरण्यलभ्यं । जीवब्रह्मणोरैक्यं परा-मृश्यत इत्याह । आत्मैक्यपरामर्श इति । फलितमाह— तेन ब्रह्म भवाम्यहमिति ॥

इदानीं छान्दोग्यश्रुतिगतस्य "तत्त्वमसि" इति वा-क्यस्यार्थप्रकाशनाय तत्पदलक्ष्यार्थमाह ।

एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।
सृष्टेः पुराधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥

'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं' इति वाक्ये-न सृष्टेः पुरा पूर्वं स्वगतभेदादिशून्यं नामरूपविरहितं यद्वस्तु प्रतिपादितं तद्वस्तुनोऽधुनापि सृष्ट्युत्तरकालेऽपि तादृक्त्वं विचारदृष्ट्या तथात्वं स्वगतभेदादिशून्यत्वं त-दिति पदेनेर्यते लक्ष्यत इत्यर्थः । त्वंपदलक्ष्यार्थमाह—

श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् ।
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥

श्रोतुः श्रवणाद्यनुष्ठानेन वाक्यार्थप्रतिपत्तेः देहेन्द्रियोप-लक्षितस्थूलादिशरीरत्रयातीतं तत्साक्षितया तद्विलक्षणं वस्तु सद्वस्त्वेव त्वंपदेरितं वाक्यगतेन त्वमितिपदेन लक्षि-तमित्यर्थः । एतद्वाक्यगतेनासीति पदेन तत्त्वंपदयोः सामा-

नाधिकरण्यं लब्धम् । पदार्थद्वयैक्यं शिष्यं प्रत्याख्यापयत इत्याह । एकता ग्राह्यतेऽसीति । सिद्धमर्थमाह, तदैक्यमनुभूयतामिति । द्वयोस्तत्त्वंपदार्थयोः ऐक्यं प्रमाणसिद्धमेकत्वमनुभूयतां मुमुक्षुभिरित्यर्थः ॥

क्रमप्राप्तस्याथर्वणवेदगतस्य "अयमात्मा ब्रह्म" इति वाक्यस्यार्थं व्याचिकीर्षुः आदावयमात्मेति पदद्वयेन विवक्षितं अर्थं क्रमेण दर्शयति ।

स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ।

अयमित्युक्तितः अयमिति शब्देन कथनात् स्वप्रकाशापरोक्षत्वं स्वयंप्रकाशत्वेनापरोक्षत्वं मतमभिमतम् । अदृष्टादिवन्नित्यपरोक्षत्वं घटपटादिवद्दृश्यत्वं च व्यावर्तयितुं विशेषणद्वयमिति बोद्धव्यम् । देहादिष्वात्मशब्दप्रयोगदर्शनादात्मशब्देन किं विवक्षितमित्याकांक्षायामाह—

अहंकारादिदेहान्तात्प्रत्यगात्मेति गीयते ॥

इति । अहङ्कारः आदिर्यस्य अहंकारप्राणमनइन्द्रियदेहसंघातस्य सः अहंकारादिः तथा देहः अन्तः यस्योक्तस्य संघातस्य स देहान्तः अहंकारादिश्चासौ देहान्तश्चेति तथा तस्मात् । प्रत्यक्प्रत्यगात्माधिष्ठानतया साक्षितया च आत्मा अन्तरात्मेति गीयते । अस्मिन् वाक्य इत्यर्थः । ब्राह्मणादिष्वपि ब्रह्मशब्दस्य प्रयोगदर्शनात् ।

तद्व्यावर्तनाय तद्विवक्षितमर्थमाह—

दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ।
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥

इति । दृश्यमानस्य दृश्यत्वेन मिथ्याभूतस्य सर्वस्याकाशादेर्जगतः प्रपञ्चस्य तत्त्वमाधिष्ठानतया तद्बाधावधित्वेन च पारमार्थिकं सच्चिदानन्दलक्षणं यद्रूपमास्ति तद्ब्रह्मशब्देनेर्यते कथ्यत इत्यर्थः । वाक्यार्थमाह । तद्ब्रह्म स्वप्रकाशात्मरूपकमिति । तदुक्तलक्षणं ब्रह्म स्वप्रकाशः आत्मस्वरूपं यस्य स्वप्रकाशात्मकमेवेत्यर्थः ॥

**Colophon**:

इति श्रीरामकृष्णाख्यविरचितात्मानात्ममहावाक्यविवेकदीपिका समाप्ता ॥

Remarks:—This is a portion of Rāmakṛṣṇa's commentary on Pañcadaśī for the portion called Mahāvākyārthaviveka.

---

## ॥ महावाक्यविवेकव्याख्या—दीपिका ॥

## 7723. MAHĀVĀKYAVIVEKAVYĀKHYĀ-DĪPIKĀ.

Burnell's Catalogue No. 9829 a. Page 94. Left column. Substance—Palm leaf. Size—$11\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves—8. Lines—5 or 6 to a Page. Script—Grantha. No. of Granthas—60. Author—Rāmakṛṣṇa. Complete. Printed.

Beginning, end, colophon and subject— Same as No. 7722.

Remarks :—The Ms. is in a fairly good condition.

---

॥ सुज्ञानविंशतिः

## 7724. SUJÑĀNAVIMŚATIḤ.

Burnell's Catalogue No. 6337 b.

Substance—Paper. Size—9¾ × 4 inches. Sheets—2 (40-42). Lines—9-11 to a Page. Script—Devanāgarī. No. of Granthas—85. Author—Mukunda. Complete. Not Printed.

**Beginning**:

श्रीगणेशाय नमः ॥

आदौ सज्जनसंगाद्गुरुगणपतिर्ध्यायते ॥ श्रीगुरवे नमः ।

गगनगहनरूपं पुष्पमेकं प्रकाशं

परिमलनिजवेदात्सारसिद्धान्तमेतत् ।

निगमविदितवृन्दैरावृतैः भक्तवृन्दैः

रसरुचिरसिको यस्सज्जनस्तं नमामि ॥

End:

इति विदितार्थतत्त्वमस्या

असिपदमानन्द नन्दयतीति पदम् (?)।

निखिलनिगमागमार्थसारात्

सारैरुवाच विंशतिश्लोकैः ॥

**Colophon:**

इति श्रीपूर्णानन्दसरस्वतीपादपद्मप्रणीतश्रीगुरुचिन्तामणिपादारविन्दध्यान्वित मुकुन्देन कृता सुज्ञानविंशतिस्सम्पूर्णा ॥ शंभार्पणमस्तु ॥

Subject: Sujñānaviṁśati a short Advaita work in 25 verses. The various topics dealt with in the work are:—

1 चारितक्रिया ।

2 तपःक्रिया ।

3 योगः ।

4 दर्शनं ।

5 ज्ञानम् ।

6 अङ्गत्वहेतुः ।

7 प्रार्थना ।

Remarks:—The Ms. is in a fairly good condition, but is full of scriptorial blunders. The other work contained herein is Bhaktāmarastotra. This author is to be distinguished from another Mukundamuni the author of a Vedāntic treatise named Vivekasindhu.

---

## ॥ आत्मानात्मपञ्चकोशविवेकः ॥

## 7725. ĀTMĀNĀTMAPAÑCAKOŚAVIVEKAḤ.

**Burnell's Catalogue No.** 6418 c.

Substance—Paper. Size—$7\frac{1}{3} \times 3\frac{1}{2}$ inches. Sheets—4 (9-12). Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—25. Author—? Incomplete. Not Printed.

Beginning:

अथ मुमुक्षोरात्माना(त्म)पञ्चकोशविवेकस्संग्रहेण प्रदर्श्यते ।

अन्नमय प्राणमय मनोमय विज्ञानमय आनन्दमय इत्येते पञ्चकोशाः ॥

End:

तथा च श्रुतिः ।

'प्राणेन रक्षन्नपरं कुलायंबहिष्कुलायादमृतश्चरित्वा' इति । तौ हि पुरुषमुममाजग्मतुस्तमेतैर्नामभिरामन्त्र्यांचक्रे बृहन् पण्डवासाः सोमराजन्निति ॥

Subject: Ātmānātmapañcakośaviveka.

Remarks:—The Ms. is in good condition. For the other works contained herein see remarks under No. 7198.

---

## ॥ महावाक्यमन्त्रम् ॥

## 7726. MAHĀVĀKYAMANTRAM.

Burnell's Catalogue. No. 15573.

Substance—Paper. Size—9 × 4 inches. Sheets—4. Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—18. Author—? Complete. Not printed.

Beginning:

अस्य श्रीमहावाक्यमन्त्रस्य सदाशिव ऋषिः । निरंज-

नो देवता । अनुष्टुप् छन्दः ।

**End:**

पुनर्जन्म न विद्यते ।

**Colophon:** Nil.

Subject: Mahāvākyamantram.

**Remarks:**—The Ms. is in a decaying condition. The sheets are broken into pieces.

---

॥ महावाक्यार्थबोधप्रकारः ॥

## 7772. MAHĀVĀKYARTHABODHAPRAKĀRAḤ.

Burnell's Catalogue No. 9677 h.

Substance—Palm leaf. Size—9 × 1½ inches. Leaf—1. Lines—8 to a Page. Script—Grantha. No. of Granthas —15. Author—?. Complete. Not printed.

**Beginning:**

देहेन्द्रियमनोबुद्धिप्राणाहंकृतिलक्षणम् ।

सच्चिदानन्दाद्वयात्मा परब्रह्मैवाहमस्मि ॥

नतं विदाथ्ययमीमाजजाना

न्यद्युष्माकं मन्तरं बभूव ।

नीहारेणप्रावृता जण्णचक्षत्र उ........श्वरन्ति ॥ (?)

अथ महावाक्यार्थप्रबोधप्रकारं व्याख्यास्यामः ।

तत्त्वमसीति सोम्यमहावाक्यमिति प्रथमं शिष्यं प्रतिज्ञा-
पयेद्गुरुः ।

End:

तत्त्वमसीति सामवेदे । अहं ब्रह्मास्मीति यजुर्वेदे । प्रज्ञा-
प्रतिष्ठा प्रज्ञानं ब्रह्मेति ऋग्वेदे । अयमात्मा ब्रह्मेत्याथर्वण-
वेदे ।

ध्यानयोगे[न] समाप्तत्वाद्ब्रह्महत्या व्यपोहति ।
संवत्सरंसदाभ्यासात् सिध्यष्टकमवाप्नुयात् ॥

Subject: Mahāvākyārthabodhaprakāraḥ; deals with the manner of teaching Mahāvākyas to a pupil.

Remarks:—The Ms. is in a fairly good condition. Though the work is named Mahāvākyārthabodhaprakāra, it is identical with No. 7740 which is printed in extenso later on.

---

॥ महावाक्यार्थबोधप्रकारः ॥

## 7728. MAHĀVĀKYĀRTHABODHAPRAKĀRAḤ.

Not noticed by Burnell No. 15574.

Substance—Paper. Size—$6\frac{1}{2} \times 2\frac{3}{4}$ inches. Sheets—2. Lines—11 to a Page. Script—Devanāgarī. No. of Granthas—15. Author—? Complete. Not printed.

Beginning, end, colophon and subject—Same as No. 7727.

Remarks:—The Ms. is in a decaying condition.

---

## ॥ ज्ञानबोधः ॥

## 7729. JÑĀNABODHAḤ.

Burnell's Catalogue No. 6472. Page 93. Left column. Substance—Paper. Size—4¾ × 8 inches. Sheets—4. Lines—7 to a Page. Script—Devanāgarī. No. of Granthas—16. Author—Śukayogin. Complete. Not printed.

Beginning:

श्रीगुरुभ्यो नमः ॥

भिन्नभेदं जगत्सर्वं त्रैलोक्यं सचराचरम् ।
अभिन्नेनैव विश्वात्मा तस्य भिक्षा विधीयते ॥ १ ॥

क्षमारूपी जितक्रोधः सत्यवादी दृढव्रतः ।
क्षरसर्वपरित्यागी तस्य भिक्षा विधीयते ॥ २ ॥

देहातीतं मनोऽतीतं देहस्थं देहवर्जितम् ।
देहभावस्थितिर्नास्ति तस्य भिक्षा विधीयते ॥ ३ ॥

End:

उत्तमो लयलीनश्च ध्यान धारण(?) मध्यमः ।
अधमो जपहोमं च पूजार्चनो(ऽ)धमाधमः ॥ १५ ॥

मूर्खस्य प्रतिमा देवो विप्रदेवो हुताशनः ।
यतीनां आत्मदेवोऽसि सर्वदेवो जनार्दनः ॥ १६ ॥

Colophon:

इति श्रीशुकयोगिविरचिते ज्ञानबोधस्तोत्रं संपूर्णमस्तु ।

Subject: Jñānabodha.

**Remarks**:—The Ms. is in very good condition but is full of scriptorial blunders.

---

## ॥ स्वरूपानुभवः ॥

## 7730. SVARŪPĀNUBHAVAḤ.

P. A. Collection No. 76 b.

Substance—Paper. Size—7½ × 4 inches. Sheets—2 (8–9). Lines—8 to a Page. Script—Devanāgarī. No. of Granthas—15. Author—Padmapādācārya. Incomplete. Printed.

**Beginning**:

........ .........ग्रात्मैषां भवेद्धि सः ॥

अन्योऽसावन्योऽहमस्मीत्युपास्ते योऽन्यदेवताम् ।

न स वेद परं ब्रह्म स देवानां यथा पशुः ॥

**End**:

ब्रह्मैवाहं न संसारी न चाहं ब्रह्मणः पृथक् ।

नाहं देहो न मे देहः केवलोऽहं सनातनः ॥

एकमेवाद्वितीयं ब्रह्म । नेह नानास्ति किंचन ॥

**Colophon**:

इति श्रीपद्मपादाचार्यविरचितं स्वस्वरूपानुभवः सम्पूर्णः ॥

**Remarks**:—The Ms. is in a fairly good condition. The other work

contained herein is Tattvārthaprakaraṇam. This work is printed by Srī Vāṇī Vilās Press, Srirangam under the name Brahmānucintana by Śaṅkarācārya in the memorial edition of Śaṅkarā's works. It has also appeared in this catalogue under the name Ātmānucintanam (No. 7160) as a minor work of Śaṅkara. But the colophon appended to this manuscript distinctly ascribes the work to Padmapādācārya one of the pupils of Śaṅkarācārya. Svarūpānubhava, Ātmānucintana and Brahmānucintana are the several names of the same work though the authorship thereof is still a matter of controversy, as the colophons attribute them to Śaṅkarācārya as well as Padmapādācārya.

---

## ॥ प्राणायामप्रकारः ॥

## 7731. PRĀṆĀYĀMAPRAKĀRAḤ.

Burnell's Catalogue No. 9902 (b).

**Substance**—Palm leaf. Size—$8\frac{1}{8} \times 1$ inches. Leaves—3 (25-27). Lines—5 to a Page. Script—Grantha. No. of Granthas—15. Author—? Incomplete. Not printed.

**Beginning**:

श्रीहरये परमात्मने नमः । श्रीदक्षिणामूर्तये नमः ।
श्रीसर्वेभ्यो ज्येष्ठ यतीन्द्रेभ्यो नमः ।

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम् ॥

भवारण्ये प्रविष्टस्य सम्मोहभ्रान्तचेतसः ।

येन मे दर्शितः पन्थाः तस्मै श्री गुरवे नमः ॥

पूरकेऽहंकारगतानिदंपंशमस्मद्वास्तवस्वरूपनित्यापरोक्षं साक्षिचैतन्यमेव परं ब्रह्मेत्यखण्डाकारवृत्तिमुत्पाद्य तस्यां वृत्तौ प्रतिफलितेन चैतन्येन कुम्भके मनसा पठितैष्षोडश-प्रणवैरज्ञानशरीरनिवृत्तिः ॥

End:

इदमेवास्मद्वास्तवस्वरूपकं साक्षिनामचैतन्यमिति भावना । पुनः प्रणवचतुष्टयेन इदमेव परं ब्रह्मेति भावना । पुनः प्रणवचतुष्टयेन परं ब्रह्मैवेदमिति भावना । पुनः प्रणवचतुष्टयेन ब्रह्मज्योतिष्वहमिति समाधिरूपावस्थानम् ॥

Colophon:

एवं प्राणायामप्रकारः ॥

Subject: Prāṇāyāmaprakāra.

Remarks:—The Ms. is in a fairly good condition.

This work is not noticed by Dr. Burnell under this number. Though the work deals with Prāṇāyāma one of the auxiliaries of Yoga it is given here because Vedānta also is coupled along with it.

---

॥ पञ्चब्रह्मतत्त्वम् ॥

## 7732. PAÑCABRAHMATATTVAM.

Burnell's Catalogue No. 6480 b. Page 208. Right column.

Substance—Paper. Size—8 × 4¾ inches. Sheets—2 (5-6). Lines—18 to a Page. Script—Devanāgarī. No. of Granthas—10. Author—? Complete. Not printed.

**Beginning:**

श्रीगणेशाय नमः ॥

गुरुपादाम्बुजं स्मृत्वा मोक्षार्थं सर्वसिद्धिदम् ।
तारकाभ्यन्तरे पञ्चब्रह्मतत्त्वं तदुच्यते ॥

**End:**

न तस्य पुनरावृत्तिर्जन्ममृत्युभयं न हि ।
निजमोक्षार्थसंसिद्धं बन्धमोक्षातिगं शुभम् ॥

**Colophon:**

इति श्रीतारकनामग्रन्थे पञ्चत्रिंशतिपञ्चकशब्दकथनं सम्पूर्णम् ॥

Subject: Pañcabrahmatattvam a treatise grouping all things that are five in number. The Ms. is full of scriptorial blunders.

---

## ॥ निर्वाणषट्कम् ॥

## 7733. NIRVĀṆAṢAṬKAM.

**Burnell's** Catalogue No 9677 c. Page 83. Right column.

Substance—Palm leaf. Size—9 × 1½ inches. Leaves—1. Lines—5 to a Page. Script—Devanāgarī. No. of Granthas—10. Author—? Complete. Printed.

**Beginning:**

यदा तत्त्वमस्यादिवाक्योपदेशैः
सदा सच्चिदानन्दभावो विभाति ।

स आचार्यवर्यस्स देवास्समस्ताः
गिरस्तस्य वेदाः पदाद्देवगंगा ॥

End:

किमद्वैतवादैश्च किं द्वैतवादैः
तथाद्वैतकाद्वैतवादैः फलं किम् ।
वृथा वार्थयालं चिदानन्दलब्धः
सदाचार्यकारुण्यमेवाग्रगण्यम् ॥

Colophon : Nil.

Subject: Nirvāṇaṣaṭka, a short poem dealing with Advaita Vedānta.

Remarks :—The Ms. is in a fairly good condition. For the other works contained herein see remarks under No. 1139 (Vol. II.)

Though this work is given a different name it is only composed of eight verses culled out from a work culled Sacchidānandabhujaṅgam noted under No. 7698.

## V. MINOR VEDĀNTA WORKS PRINTED IN EXTENSO.

| Descriptive No. | Collection No. | Title of the work. | Author. | Substance. | Size inches. | No. of Sheets or leaves. | Script. |
|---|---|---|---|---|---|---|---|
| 7734 | B. L. 9856 a | Navamaṇimālā | Sadāśivabrahman | Palm leaf. | $11\frac{1}{2} \times 1\frac{1}{2}$ | 1 | Grantha. |
| 7735 | „ 9857 a | „ | „ | „ | $18\frac{1}{2} \times 1\frac{1}{2}$ | 1 | „ |
| 7733 | P. A. 109 b | Vedāntasāravārttikarāja-saṅgrahaḥ | Sureśvara | Paper. | $10 \times 4\frac{1}{2}$ | 3 | Devanāgarī. |
| 7737 | B. L. 9868 b | Pañcīkaraṇam | ? | Palm leaf. | $9\frac{1}{2} \times 1\frac{1}{2}$ | 2 | Telugu. |
| 7738 | „ 6418 b | „ | ? | Paper. | $7\frac{7}{8} \times 3\frac{1}{2}$ | 6 | Devanāgarī. |
| 7739 | J. L. 938 | Mahāvākyavivaraṇam | ? | „ | $5\frac{1}{4} \times 4$ | 4 | „ |
| 7740 | Ms. 15575 | „ | ? | „ | $6 \times 4\frac{1}{2}$ | 2 | „ |
| 7741 | J. L. 989 | „ | ? | „ | $5\frac{1}{4} \times 4\frac{1}{4}$ | 9 | „ |
| 7742 | Ms. 18677 | Svātmānandastotram | Vimalabrahma-varya | „ | $6 \times 3\frac{1}{8}$ | 6 | „ |
| 7743 | „ 18814 | „ | „ | „ | $6\frac{1}{2} \times 3\frac{3}{4}$ | 4 | „ |
| 7744 | B. L. 8820 | „ | „ | „ | $7\frac{1}{2} \times 3\frac{1}{2}$ | 3 | „ |
| 7745 | J. L. 956 | Upadeśaśikhāmaṇiḥ | Tyāgarāja | „ | $5\frac{3}{4} \times 3\frac{1}{2}$ | 4 | Devanāgarī. |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| 7746 | B. L. | 9856 f | Ātmānusandhānam | Sadāśivabrahman | Palm leaf. | $11\frac{1}{4}\times1\frac{1}{2}$ | 4 | Grantha. |
| 7747 | ,, | 9857 f | ,, | ,, | ,, | $18\frac{1}{2}\times1\frac{1}{4}$ | 2 | ,, |
| 7748 | ,, | 6488 b | Sammiśrapañcīkaraṇam | ? | ,, | $9\times4\frac{1}{8}$ | 3 | ,, |
| 7749 | ,, | 6490 b | ,, | ? | ,, | $8\frac{1}{2}\times4\frac{1}{8}$ | 2 | ,, |
| 7750 | ,, | 9829 f | Nṛsiṃhadhyānam | ? | Palm leaf | $9\frac{1}{8}\times1\frac{1}{8}$ | 5 | ,, |
| 7751 | ,, | 6550 | Anubhavapañcaviṃśatiḥ | ? | Paper | $5\frac{1}{4}\times4$ | 3 | Devanāgarī. |
| 7752 | ,, | 6862 | ,, | ,, | ,, | $8\times4\frac{7}{8}$ | 2 | ,, |
| 7753 | ,, | 6355 | Jīvanmuktalakṣaṇam | Dattātreya | ,, | $8\frac{1}{8}\times4\frac{1}{4}$ | 2 | ,, |
| 7754 | ,, | 9856 c | Svapnoditam | Sadāśivabrahman | Palm leaf | $11\frac{1}{2}\times1\frac{1}{2}$ | 2 | Grantha. |
| 7755 | ,, | 9857 c | ,, | ,, | ,, | $18\frac{1}{2}\times1\frac{1}{4}$ | 1 | ,, |
| 7756 | ,, | 6196 c | Pañcīkṛtam | ? | Paper | $10\frac{1}{4}\times4$ | 1 | Devanāgarī. |
| 7757 | ,, | ,, d | ,, ,, ṭīkā | ? | ,, | ,, | 2 | ,, |
| 7758 | ,, | 9882 c | Praṇavārthaprakāśikā | Kaivalyānanda-tīrtha | Palm leaf | $10\frac{1}{4}\times1\frac{1}{4}$ | 2 | Grantha. |
| 7759 | ,, | 9668 a | Sādhanacatuṣṭayasampattiḥ | ? | ,, | $9\frac{1}{2}\times1\frac{1}{2}$ | 1 | Telugu. |
| 7760 | ,, | 9748 d | Saptaślokī | ? | Palm leaf | $15\frac{1}{2}\times1\frac{1}{3}$ | 1 | Grantha. |
| 7761 | ,, | 9834 d | Bhikṣvaṣṭakam | Saccidānandayatiḥ | ,, | $15\times1\frac{1}{8}$ | 1 | Telugu. |
| 7762 | ,, | 6481 | Ātmatattvam | ? | Paper | $6\times4$ | 2 | Devanāgarī. |

| Descriptive No. | Collection No. | Title of the work. | Author. | Substance. | Size inches. | No. of Sheets or leaves. | Script. |
|---|---|---|---|---|---|---|---|
| 7763 | B. L. 6356 | Manolayaprakaraṇam | ? | Paper | $8\times4\frac{1}{2}$ | 1 | Devanāgarī. |
| 7764 | T. S. 134 | " | ? | " | $8\times3\frac{1}{2}$ | 1 | " |
| 7765 | S. S. 48 b | Brahmanirāmayāṣṭakam | ? | " | $12\frac{1}{4}\times5\frac{1}{2}$ | 1 | " |
| 7766 | B. L. 9668 d | Urmiṣatkam | ? | Palm leaf | $9\frac{1}{2}\times1\frac{1}{2}$ | 1 | Telugu. |
| 7767 | P. A. 88 | Anubhavasopānam | ? | Paper | $8\times4$ | 1 | Devanāgarī. |
| 7768 | " 78 c | Pādukāpañcakam | ? | " | $7\frac{3}{8}\times4$ | 1 | " |
| 7769 | S. K. 138 b | Vairāgyapañcakam | Vasudevendraśiṣya | " | $8\times4\frac{1}{2}$ | 1 | " |
| 7770 | B. L. 9858 a | Svānubhūtiprakāśika | Sadāsivabrahman | Palm leaf | $11\frac{1}{2}\times1\frac{1}{2}$ | 2 | Grantha. |
| 7771 | " 9856 b | " | " | " | " | 1 | " |
| 7772 | " 9857 b | " | " | " | $18\frac{1}{4}\times1\frac{1}{4}$ | 1 | " |

# V. MINOR VEDĀNTA WORKS

## Printed in extenso.

(Nos. 7734 to 7772 already described in the tabular statement are here printed in full for the first time.)

॥ नवमणिमाला ॥

7734—7735. NAVAMAṆIMĀLĀ.

विषयेषु निर्व्यपेक्षं
विमलतरज्ञानसंपदध्यक्षम् ।
परमकरुणार्द्रवीक्षं
परमशिवाचार्यपादमद्राक्षम् ॥ १ ॥

निर्जितवादिमृगेन्द्रं
भर्जितमदमानकामवैरीन्द्रम् ।
श्रितचयकुवलयचन्द्रं
परमशिवेन्द्रं भजामि निस्तन्द्रम् ॥ २ ॥

वेलातीतभवार्णव-
मग्नजनोद्धरणचातुरीधुर्यम् ।
प्रणतहृदम्बुजसूर्यं
परमशिवार्यं प्रणौमि गुरुवर्यम् ॥ ३ ॥

यत्करुणानीरनिधे-
र्निर्मलविद्यामयो मणिर्लब्धः ।
तं देशिकवरमन्तः
परमशिवाचार्यपादमवलम्बे ॥ ४ ॥

यस्योपर्याधाय
प्रत्यग्वाग्गौरीभरं स हरः ।

मौनमधारयदुचितं
परमशिवेन्द्रं तमानतोऽस्मि गुरुम् ॥ ५ ॥

व्याकुर्वति सति यस्मि-
न्नीशानः स्वाधिकारशैथिल्यात् ।
प्रापद्वटतरुमूलं
परमशिवेन्द्रं तमाभजे सततम् ॥ ६ ॥

प्रवितनतजनमोह-
प्रशमनपद्वाक्प्रबोधितात्मानम् ।
वरकरुणाभरजलधिं
परमशिवेन्द्रं धियां निधिं वन्दे ॥ ७ ॥

शमितान्तरसंतमसं
विरचितविज्ञानकैरवोल्लासम् ।
कलये परमशिवेन्द्रं
कमपि सुखाकाशपरिलसच्चन्द्रम् ॥ ८ ॥

यन्निष्क्रियं निरंशं
सूक्ष्ममलक्ष्यं च शुद्धपरतत्त्वम् ।
तत्त्वमसीति वदन्तं
परमशिवेन्द्रं भजेऽहमश्रान्तम् ॥ ९ ॥

नवमणिमालामेतां
गुरुवरचरणारविन्दनुतिरूपाम् ।
धारयति यस्तु कण्ठे
स जयति कैवल्यसाम्राज्ये ॥ १० ॥

दाक्षायणीपतिदयार्द्रनिरीक्षणेन
साक्षादवैति परतत्त्वमिहैव धीरः ।
न स्नानदानजपहोमसुरार्चनादि-
धर्मैरशेषनिगमान्तनिरूपणैर्वा ॥

हरिः ॐ ॥ गुरवे नमः ॥

---

## ॥ वेदान्तसारवार्त्तिकराजसंग्रहः ॥

## 7736. VEDĀNTASĀRAVĀRTTIKARĀJA-SAṄGRAHAḤ.

नन्वसौ सर्वभावाप्तिर्न विद्यामात्रतो भवेत् ।
विनोत्तमत्वानुष्ठानकालदेवाद्यनुग्रहान् ॥ १ ॥

विप्रस्य फलदो वेदो न शूद्रस्याधमत्वतः ।
देवादेरुत्तमस्यैव तथा विद्या फलप्रदा ॥ २ ॥

यागज्ञानमनुष्ठानाद्विना न स्वर्गदं तथा ।
ब्रह्मज्ञानमनुष्ठानाद्विना सर्वाप्तिदं कथम् ॥ ३ ॥

गर्भाधानमृतावेव नान्यकाले यथोत्तमे ।
विद्या कृतयुगे सर्वभावं गच्छति नान्यथा ॥ ४ ॥

राज्ञा कृषिफलं यद्वत्करार्थं प्रतिपद्यते ।
सर्वभावस्तथा देवैर्यागभुग्भिर्निवार्यते ॥ ५ ॥

तस्मादनुत्तमे जन्मन्यनुष्ठानमृते कलौ ।
युगे देवाद्यृणवतो न विद्या सर्वभावदा ॥ ६ ॥

इति चोदयितुर्येऽत्र चत्वारश्चोद्यहेतवः ।
तद्यो य इत्यादिवाक्यैश्चतुर्भिस्तान्निरस्यति ॥ ७ ॥

न तावदुत्तमं जन्म सर्वभावप्रयोजकम् ।
उत्तमस्यापि देवादेः सर्वत्राब्रह्मबोधतः ॥ ८ ॥

यो देवानामृषीणां वा मध्ये ब्रह्म व्यबुध्यत ।
असावसावेव सर्वमभून्नान्यस्तु कश्चन ॥ ९ ॥

मनुष्याणां तथा मध्ये ब्रह्मवित्सर्वभावता ।
विद्याविधे एव तस्मात्सर्वतान्यत्वकारणे ॥ १० ॥

ब्रह्म वा इदमग्रेऽभूदिति विद्याधिकारिता ।
श्रूयते ब्रह्मणो ब्रह्म सर्वजातिषु तत्समम् ॥ ११ ॥

न पश्वादेः सर्वभावप्रसङ्गो बोधवर्जनात् ।
शूद्रजातिस्तु विदुरः सर्वभावात्स मुच्यते ॥ १२ ॥

यागविद्येवात्मविद्या नानुष्ठानमपेक्षते ।
फलदान इति ज्ञेया वामदेवादिदर्शनात् ॥ १३ ॥

ब्रह्मात्मत्वं वामदेवः पश्यन्मन्वादिरूपताम् ।
प्रतिपेदे ह्यनुष्ठानावसरस्तस्य को वद ॥ १४ ॥

प्रयोजनं च विद्याया अनुष्ठानेऽत्र किं भवेत् ।
किमन्तरायापगमः किं वा जन्मनिरोधनम् ॥ १५ ॥

पुमर्थावसितिः किं वा यद्वा बाध्यार्थबाधना ।
अन्यद्वा किंचिदत्र स्यात्प्रक्रमे तदसंभवि ॥ १६ ॥

ब्रह्मप्राप्त्यन्तरायस्य प्रत्यक्संमोहरूपिणः ।
प्रत्यग्विज्ञानतो ध्वस्तौ कोऽन्तरायोऽन्य उच्यताम् ॥ १७ ॥

सकृदात्मप्रसरयैव निरुपाख्याखिलं भवेत् ।
विद्यामोहनिरासेन रोद्धव्यं जन्म किं ततः ॥ १८ ॥

अविद्याध्वंसमात्रेण पुमर्थश्च समाप्यते ।
आनन्दस्य स्वरूपत्वादर्थनीयान्तरं न हि ॥ १९ ॥

नाबाधित्वेह बाध्यार्थबाधको बाधकात्मताम् ।
लभते तत्स्वलब्ध्यैव विद्या बाध्यं प्रबाधते ॥ २० ॥

सम्यग्ज्ञानपरिप्लुष्टमोहतत्कार्यरूपिणः ।
अपेक्ष्यं शिष्यते नान्यदतः स्यादननुष्ठितिः ॥ २१ ॥

अनात्मबुद्धिसत्यत्वनिवारणमपेक्ष्यते ।
अनुष्ठितिश्चेन्मैवं तत्सत्यत्वस्याप्रसक्तितः ॥ २२ ॥

ध्वान्तादिघस्मरे प्रत्यगद्वैतात्मावबोधने ।
प्रत्यर्थिनि स्थितेऽनात्मधियां स्यात्सत्यता कुतः ॥ २३ ॥

तस्मात्पश्यन्वामदेवः प्रतिपेद इतीरणात् ।
विद्याकालेऽपि सर्वाप्तिरविलम्बादितीक्ष्यताम् ॥ २४ ॥

वामदेवस्य मन्वादिरूपाप्तिर्न विरुध्यते ।
उपाधिमात्रभेदेन वस्तुतत्त्वैक्यसंभवात् ॥ २५ ॥

वामदेवो मनुः सूर्य इति शब्दैरुपाधयः ।
मूढव्यवहृतौ भान्ति विद्वद्व्यवहृतौ तु चित् ॥ २६ ॥

न चितो वामदेवे वा मनौ वान्येषु वा भिदा ।
तेन मन्वादिचिद्वामदेवेन प्रत्यपद्यत ॥ २७ ॥

ये तु पुण्ययुगे सर्वभावो न तु कलाविति ।
तदसद्बोधसाध्यस्य पुण्यकालानपेक्षणात् ॥ २८ ॥

न सूर्यग्रहणापेक्षा बोधाच्चिद्राश्रये क्वचित् ।
तथा न सर्वभावोऽयं कालभेदमपेक्षते ॥ २९ ॥

य एतर्ह्यपि वेदाहं ब्रह्मास्मीति तदैव सः ।
इदं सर्वं भवत्येव यदिदं जगदीक्षते ॥ ३० ॥

अविचारितरम्यस्य नामरूपात्मकस्य यत् ।
जगतो वास्तवं रूपं सततं ब्रह्म तद्भवेत् ॥ ३१ ॥

तादृग्ब्रह्माहमस्मीति साक्षात्कृतवतः कथम् ।
सर्वभावे विवादः स्यात्सर्वाख्यं ब्रह्म नेतरत् ॥ ३२ ॥

नाम रूपं तु नो सर्वं तयोर्मायामयत्वतः ।
ब्रह्मैव वास्तवं सर्वं ज्ञानेनैव तदाप्यते ॥ ३३ ॥

ब्रह्मैव निखिलो जन्तुर्बोधात्प्रागपि वस्तुतः ।
अब्रह्मत्वमबोधात्स्याद्बोधात्तु ब्रह्मता ततः ॥ ३४ ॥

ब्रह्मबोधात्सर्वभावो भवेत्कृतयुगे न किम् ।
न निवारयितुं शक्यः सर्वभावः कलावपि ॥ ३५ ॥

नराणामधमर्णत्वात्सर्वभावं दिवौकसः ।
वारयन्ति हविर्भोक्तुं तैर्दत्तमिति चेन्न तत् ॥ ३६ ॥

तस्य ज्ञातात्मतत्त्वस्य प्रध्वस्ततमसो यतेः ।
इन्द्रादयोऽपि नैवालं सर्वभावान्निवारणे ॥ ३७ ॥

यद्यपीशा नृणां देवास्तथापि ब्रह्मवेदिनः ।
अनीशाः प्रत्युतैतेषामात्मा भवति तत्त्ववित् ॥ ३८ ॥

ईशेशितव्यसंबन्धः प्रत्यगज्ञानहेतुजः ।
ज्ञानेऽज्ञानतमोध्वस्तावीश्वराणामपीश्वरः ॥ ३९ ॥

अधमर्णो भवेदज्ञो देवादेर्न तु तत्त्ववित् ।
देवाद्यैश्वर्यविषयव्यतिक्रान्तत्वहेतुतः ॥ ४० ॥

सर्वज्ञस्य न विस्रम्भः कर्मानुष्ठान आपतेत् ।
देवैर्विप्राद्युत्तमर्णैः फलवारणसंभवात् ॥ ४१ ॥

नैवं देवैश्च कालादीनपेक्ष्यैव कृतत्वतः ।
कर्मणः फलदानायानुकूला ईश्वरादयः ॥ ४२ ॥

प्रतिबध्नन्ति यत्रैते फलं तत्रास्य कर्मणः ।
प्रबलस्य फलं दातुमेवैतदपि जानते ॥ ४३ ॥

अतः कर्मप्रधानत्वं श्रुतिस्मृतिषु संमतम् ।
तच्छ्लोकेषु कालादेरपि प्राधान्यमीरितम् ॥ ४४ ॥

कर्मकालेश्वरादीनां फलदानविवक्षया ।
प्राधान्यं वस्तु तत्सर्वं सर्वत्रापि ह्यपेक्षते ॥ ४५ ॥

सत्यं त्वृणित्वे देवाद्या नाज्ञानां कर्मणः फलम् ।
प्रतिबध्नन्ति वक्तव्यमनृणज्ञानिनां किमु ॥ ४६ ॥

न चेहाविदुषोऽपि स्यादृणित्वं देहसंभवात् ।
न किंचिन्नतु तैः प्राप्तमृणित्वं येन नो भवेत् ॥ ४७ ॥

शास्त्रादृणित्वमिति चेन्न शास्त्रस्यार्थवादतः ।
अवदानाविधेरर्थवादो ह्यण्वपि च श्रुतौ ॥ ४८ ॥

पूर्वमप्यनृणः पश्चाद्देवानामन्तरात्मताम् ।
गतो बोधादस्य देवाः कथं स्युः प्रतिबन्धकाः ॥ ४९ ॥

इत्थं ये सर्वभावस्य वारकाश्चोद्यहेतवः ।
उन्मूलितास्ते निर्विघ्नः सर्वभावो भवेत्ततः ॥ ५० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पाद-
शिष्यसुरेश्वराचार्यविरचितो वेदान्तसारवार्त्तिकराजसंग्रहः
समाप्तः ।

## ॥ पञ्चीकरणम् ॥

## 7737 & 38. PAÑCĪKARAṆAM.

अथात्मजिज्ञासोस्त्वंपदार्थविवेकाय चतुर्विंशतितत्त्वाना-मुत्पत्तिक्रमः प्रदर्श्यते । ब्रह्माश्रयं त्रिगुणात्मकमज्ञानम् । तस्मात्त्रिगुणात्मकान्याकाशादीनि सूक्ष्मभूतान्युत्पद्यन्ते । ते-भ्यः श्रोत्रादीन्येकोनविंशतितत्त्वान्युत्पन्नानि । पञ्चीकृत-स्थूलभूतेभ्यः शब्दादिविषया उत्पन्नाः । कथम् । आकाश-सात्त्विकांशाच्छ्रोत्रेन्द्रियमुत्पन्नम् । वायोः सात्त्विकांशात्त्व-गिन्द्रियमुत्पन्नम् । अग्नेः सात्त्विकांशाच्चक्षुरिन्द्रियमुत्पन्नम् । अपांसात्त्विकांशाज्जिह्वेन्द्रियमुत्पन्नम् । पृथिव्याः सात्त्वि-कांशाद्घ्राणेन्द्रियमुत्पन्नम् । एतानि ज्ञानेन्द्रियाणि । तथा च श्रुतिः । 'श्रोत्रमाकाशे वायौ त्वक् अग्नौ चक्षुः अप्सु जिह्वा पृथिव्यां घ्राणम्' इति । आकाशादीनां सर्वेभ्यः सात्त्विक-कांशेभ्योऽन्तःकरणमुत्पन्नम् । तच्चतुर्विधं मनोबुद्ध्य-हंकारचित्तभेदेन । आकाशरजोभागाद्वागिन्द्रियमुत्पन्नम् । वायुरजोभागात्पाणीन्द्रियमुत्पन्नम् । अग्निरजोभागा-त्पादेन्द्रियमुत्पन्नम् । अपां रजोभागादुपस्थेन्द्रियमुत्पन्नम् । पृथिवीरजोभागात्पाय्विन्द्रियमुत्पन्नम् । एतानि कर्मे-

न्द्रियाणि । आकाशादीनां सर्वेभ्यो रजोंशेभ्यः प्राण उत्पन्नः । स तु हृदयादिस्थानभेदेन पञ्चविधः । तथा चोक्तम् ।

'हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥'

इति । श्रुतिरपि 'प्राणोऽपानो व्यान उदानः समान इत्येतत् सर्वं प्राण एव' इति । आकाशादीनां तमोभागान् प्रत्येकं द्विधा विभज्य पुनरेकैकमर्धं चतुर्धा कृत्वा तान् भागानितरार्धेषु स्वांशं विहाय क्रमेण योजयेत् । योजितेषु भागेषु आकाशादीनि पञ्चीकृतस्थूलभूतान्युत्पद्यन्ते । उत्पन्नेषु भूतेषु शब्दस्पर्शरूपरसगन्धाः पञ्च विषया उत्पन्ना आकाशादिषु यथाक्रममेकद्वित्रिचतुष्पञ्चधा विभज्यन्ते । पञ्चीकृतभूतेभ्यः स्थूलशरीरमुत्पन्नम् । 'अथातः पृथिव्यादिमहाभूतानां समवायः शरीरम्' इति श्रुतेः । तत्र ये कठिनांशा अस्थिमांसरोमादयः सा पृथिवी । ये द्रवांशाः रक्तमूत्रादयस्ता आपः । ये उष्णांशाः क्षुत्तृण्निद्रादयः सोऽग्निः । ये गमनागमनादयः स वायुः । ये च्छिद्रकामक्रोधादयः स आकाशः । तथा च श्रुतिः 'यत्कठिनं सा पृथिवी, यद्द्रवं तदापः, यदुष्णं तत्तेजः, यत्सरति स वायुः, यत्सुषिरं तदाकाशमित्युच्यते' इति । तथा चोक्तम् ।

'अस्थि चर्म तथा स्नायू रोम मांसं तथैव च ।
पृथ्व्याः पञ्च विधास्तज्ज्ञैः समासेन प्रकीर्तिताः ॥
रक्तं मूत्रं तथा श्लेष्मा शुक्रं मेदस्तु पञ्चमम् ।
अपां पञ्च विधास्तज्ज्ञैः समासेन प्रकीर्तिताः ॥
क्षुत्तृष्णा च तथा निद्रा आलस्यं रतिरेव च ।
वह्नेः पञ्च विधास्तज्ज्ञैः समासेन प्रकीर्तिताः ॥
प्रचारोच्चरणारोहास्तथा चोत्थानरोधने ।
वायोः पञ्च विधास्तज्ज्ञैः समासेन प्रकीर्तिताः ॥
कामः क्रोधश्च लोभश्च मोहश्चैव भयं तथा ।
व्योम्नः पञ्च विधास्तज्ज्ञैः समासेन प्रकीर्तिताः ॥

श्रोत्रादिज्ञानेन्द्रियाणां विषयाः शब्दस्पर्शरूपरसगन्धाः । वागादिकर्मेन्द्रियाणां विषया वचनादानगमनविसर्गानन्दाः । अन्तःकरणचतुष्टयस्य विषयाः संकल्पाध्यवसायाभिमानावधारणरूपाः । श्रोत्रादिचतुर्दशकरणानामधिपतयो दिगादयः । तथा चोक्तम्—

'दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमृत्युकाः ।
तथा चन्द्रश्चतुर्वक्त्रो रुद्रः क्षेत्रज्ञ ईश्वरः' ॥

इति । श्रोत्रादिचतुर्दशकरणान्यध्यात्मसंज्ञिकानि । तेषां विषयाः शब्दादयोऽधिभूतसंज्ञिकाः । ये करणाधिपतयो दिगादयस्ते अधिदैवसंज्ञिकाः । तथा च श्रुतिः—

'श्रोत्रमध्यात्मम् । श्रोतव्यमधिभूतम् । दिक् तत्राधिदैवतम् । त्वगध्यात्मम् । स्प्रष्टव्यमधिभूतम् । वायुस्तत्राधिदैवतम् । चक्षुरध्यात्मम् । द्रष्टव्यमधिभूतम् । सूर्यस्तत्राधिदैवतम् । वागध्यात्मम् । वक्तव्यमधिभूतम् । अग्निस्तत्राधिदैवतम् । पादोऽध्यात्मम् । गन्तव्यमधिभूतम् । विष्णुस्तत्राधिदैवतम् । पायुरध्यात्मम् । विसर्जयितव्यमधिभूतम् । मित्रस्तत्राधिदैवतम् । उपस्थोऽध्यात्मम् । आनन्दयितव्यमधिभूतम् । प्रजापतिस्तत्राधिदैवतम् । अन्तःकरणमध्यात्मम् । निर्विकल्पस्फुरणमधिभूतम् । नारायणस्तत्राधिदैवतम् । मनोऽध्यात्मम् । मन्तव्यमधिभूतम् । चन्द्रस्तत्राधिदैवतम् । बुद्धिरध्यात्मम् । बोद्धव्यमधिभूतम् । बृहस्पतिस्तत्राधिदैवतम् । चित्तमध्यात्मम् । चेतयितव्यमधिभूतम् । क्षेत्रज्ञस्तत्राधिदैवतम् । अहंकारोऽध्यात्मम् । अहंकर्तव्यमधिभूतम् । रुद्रस्तत्राधिदैवतम् । सत्त्वमध्यात्मम् । ज्ञातव्यमधिभूतम् । विष्णुस्तत्राधिदैवतम् । रजोऽध्यात्मम् । ममकर्तव्यमधिभूतम् । ब्रह्मा तत्राधिदैवतम् । तमोऽध्यात्मम् । विकारयितव्यमधिभूतम् । ईश्वरस्तत्राधिदैवतम् । इत्येवमध्यात्ममधिभूतमधिदैवतं च तत्सर्वमुक्तम् । एवमवशिष्टेषु करणेषु द्रष्टव्यम् । एवं चतुर्विंशतितत्त्वानि । तेभ्यः परं कूटस्थमात्मतत्त्वं विविच्य यो जानाति सोऽमृतत्वाय कल्पते । 'तरति शोकमात्मवित्' इति श्रुतेः ।

तथा चोक्तम्—

पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे भवेत् ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥

क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥

इति श्रीभगवद्वचनाच्च ॥

इति श्रीपञ्चीकरणं समाप्तम् ॥

---

## ॥ महावाक्यविवरणम् ॥

## 7739. MAHĀVĀKYAVIVARAṆAM.

नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्ति परं ब्रह्म स्वानुग्रहार्थमिमं मानुषं वेषं धारयित्वा तिष्ठतीत्यत इत्थंभूताय स्वगुरवे स्वशरीरपर्यन्तं सर्वस्वं निवेद्य मुहुर्मुहुः प्रणम्य विज्ञापनं कुर्यात् । 'भो भगवन्, कीदृशं स्वरूपमिति न जाने, ममार्थे पुरुषार्थ इति च न जाने तत्स्वयमेव सर्वं विदित्वा मम यद्धितं मन्यसे तदेव मह्यमनुगृहाण । अहं तु नानादुःखमयसंसारजलधिमध्ये-ऽनन्यशरणः परिभ्रमामि । मद्भाग्यवशात् सर्वज्ञः परमकारुणिको भवान् प्लव इवोपलब्धोऽसि । अतो मां भवाब्धेस्तारय रक्ष रक्ष' इति वदन्नुपासीत । एवं शिष्येणोपासितो गुरुः यदा महत्प्रधानभूतब्रह्मविद्याया-स्तु समस्तदुःखमयमूलभूतप्रातिकूलाविद्यानिवर्तकत्वेन नित्यनिरतिशयानन्दस्वरूपप्रापकत्वेन समस्तानुकूलता च सुप्रसिद्धा । एवंभूतब्रह्मविद्योपदेशप्रकारः प्रस्तूयते । तत्र श्रोत्रियो ब्रह्मनिष्ठस्तत्त्वप्रतिपादनसमर्थः समस्तमन्त्रप्रयोगकुशलः शमशील आश्रमी परमकारुणिकः सर्वलक्षण

संपन्नो महापुरुषः सर्वविद्योपदेष्टा भवति । शिष्यस्तु श्रुताध्ययनसंपन्नः सदाचारो नित्यानित्यवस्तुविवेकी सर्वलक्षणयुक्तो गुरुभक्तो निखिलपुरुषार्थाकाङ्क्षी मन्त्रदेवतोपासनरत उपदेश्यो भवति । तत्र शिष्यः स्वगुरुमित्थं भावयेत् । अतीव कृपालु वर्तते तदैवोपदिशेत् । तत्र शिष्यं स्ववामपार्श्वे समुपवेश्य तच्छिरस्यमृतमयं दक्षिणकरं निधाय कृपादृष्ट्या विलोकयन् शिष्यस्वरूपं स्वस्वरूपभूतसत्यज्ञानानन्तानन्दलक्षणब्रह्मणा सहाभेदमनुसंधाय इत्थमुपदिशेत् । "तत्त्वमसि । अहं ब्रह्मास्मि । अयमात्मा ब्रह्म । प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म । सत्यं ज्ञानमनन्तं ब्रह्म । एष त आत्मान्तर्याम्यमृतः । तथोऽहं सोऽसौ, योऽसौ सोऽहम् । स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः" । इत्यादि महावाक्यप्रतिपाद्यं नित्यशुद्धबुद्धमुक्तस्वभावं सत्यज्ञानानन्तानन्दस्वरूपं परिपूर्णं परब्रह्मैवासि न संसारी त्वं न कर्ता नापि भोक्ता कर्तृत्वादिहेतुभूतदेहेन्द्रियमनोबुद्धिप्राणाहंकारादिपुत्रमित्रकलत्रादिभूतभौतिकभुवनादिसर्वप्रपञ्चः सर्वपरमार्थानुस्यूतसच्चित्सुखैकब्रह्मस्वरूपे त्वय्येव रज्जुसर्पवत्कल्पितः । त्वमेव समस्तपुरुषार्थब्रह्मानन्दस्वरूप इत्येवमुपदिष्टलक्षणं सच्चिदानन्दाद्वयं ब्रह्माहमस्मीति निःसन्दिग्धं भावयेत् । अनन्तरं तु गुरुरुक्तं निराकारब्रह्मविद्यारूपमन्त्रांस्तदुक्तविधानेन तदनुष्ठानप्रकारानुपदिशेत् ॥

एतैर्मन्त्रैरुपासीत । सच्चित्पूर्णानन्दस्वरूपभक्तानुग्रहगृहीतविग्रहो भगवांस्तदैहिकश्रेयांसि दत्त्वा ब्रह्मविद्यां विप्रतिबन्धमुद्बोधयिष्य इति । एवं गुरुणोपदिष्टः शिष्यस्तन्मन्त्रानपि यथावदनुतिष्ठेत् ।

ऐषब्रह्मोपदेशस्स्यादेष दीक्षेति कथ्यते ।
दीयते ज्ञानसर्वस्वं क्षीयते पापपञ्जरः ॥

दानक्षपणधर्मत्वाद्दीक्षेत्याहुर्मनीषिणः ।
प्रदद्याद्दिव्यभावं तु क्षिणुयाद्दुरितान्यहो ॥

---

## ॥ महावाक्यविवरणम् ॥

## 7740&41. MAHĀVĀKYAVIVARAṆAM.

अथ महावाक्यार्थप्रबोधप्रकारं व्याख्यास्यामः । तत्त्वमसीति सोम्य महावाक्यमिदामिति प्रथमं शिष्यं प्रति ज्ञापयेद्गुरुः । तेन तत्त्वमसीत्यस्मिन्महावाक्ये त्रीणि पदानि भवन्ति— तत् त्वम् असीति । तत्पदस्य द्वावर्थौ वाच्यो लक्ष्यश्चेति । मायाशबलं ब्रह्म वाच्योऽर्थः । मायाविनिर्मुक्तं सत्यज्ञानानन्दरूपं लक्ष्यम् । त्वंपदस्य द्वावर्थौ वाच्यो

लक्ष्यश्चेति । स्थूलसूक्ष्मशरीरद्वयपरिवेष्टितं चैतन्यं वाच्योऽर्थः । स्थूलसूक्ष्मशरीरद्वयविनिर्मुक्तं प्रत्यक्चैतन्यं लक्ष्यम् । तत्त्वमसि किमहं भवामि ? त्वं तदसीत्यैक्ये बोधिते सति संसार्यसंसारिणोः कथमैक्यमिति विरोधस्फुरणं भवेत् । ततो जहदजहल्लक्षणया सोऽयं देवदत्त इत्यत्र यथा तद्देशतत्कालपरित्यागेनोभयत्र देवदत्तस्वरूपमात्रं लक्ष्यते तद्वदुभयपरित्यागेन लक्षणया द्वयोर्लक्ष्ययोरैक्यमखण्डं ज्ञात्वाकृतकृत्यो भवेत् । तदखण्डं सजातीयविजातीयभेदरहितमित्यात्मभेदो नास्ति । स्वगतभेदरहितमित्येकरसं सैन्धवघनवज्ज्ञानघनं निर्गुणं निरवयवं सर्वगतमवस्थात्रयाविनिर्मुक्तमसङ्गं तद्ब्रह्मैवाहमस्मि । इत्यभेदेनावस्थानं समाधिः । एवं महावाक्यार्थं सदा स्मरतो मुक्तिर्भवत्येव । तरति शोकमात्मवित् ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥
तस्य को मोहः कः शोक एकत्वमनुपश्यतः ॥

अभयं वै जनक प्राप्तोऽसि । ब्रह्मविदाप्नोति परम् । ब्रह्म वेद ब्रह्मैव भवति । तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति । शुको मुक्तो वामदेवो मुक्तः । अयमात्मा ब्रह्म । "स एतमेव पुरुषं ब्रह्म ततममपश्यत्" इत्यृग्वेदे । "अहं ब्रह्मास्मि" इति यजुर्वेदे । 'तत्त्व-

मसि ' इति सामवेदे । ' तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ ' इत्याथर्वणवेदे । ' तद्योऽहं सोऽसौ योऽसौ सोऽहम् ' । ' स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः । स य एवंवित् ' । ' प्राणोऽस्मि प्रज्ञात्मा ' । ' प्रज्ञानं ब्रह्म ' । ' अहं ब्रह्मास्मि ' इति चतुर्णां वेदानाम् । ' परो रजसि सावदोम् । ओं ब्रह्म ' ।

अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः ।
आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम् ॥

नित्योऽहं निर्विकल्पोऽहं निराकारोऽहमव्ययः ।
सच्चिदानन्दरूपोऽहं परिपूर्णोऽस्म्यहं सदा ॥

आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन ।
स्वभावनिर्मलः शुद्धः स एवाहं न संशयः ॥

ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ।
अशक्नुवन्भावयितुं वाक्यमेतदुदीरयेत् ॥

ध्यानयोगेन मासैकाद्ब्रह्महत्यां व्यपोहति ।
संवत्सरसदाभ्यासात्सिद्ध्यष्टकमवाप्नुयात् ॥

तत्सद्ब्रह्मार्पणमस्तु ॥

---

## ॥ स्वात्मानन्दस्तोत्रम् ॥

## 7742–44, SVĀTMĀNANDASTOTRAM.

### गजाननस्तवः ॥

विघ्नौघतिमिरस्तोमसौभगर्द्धिदिवाकरः ।
मन्यते वरदोऽस्माभिर्गजाननविभुर्मुदा ॥ १ ॥

### देवीस्तवः ॥

अनेकजन्मसंप्राप्तामहं महिषमर्दिनीम् ।
नौमि प्रज्ञां तुरीयां तामम्बा विश्वेति विश्रुताम् ॥ २ ॥

### समर्थस्तवः ॥

सीतापतिपदाम्भोजभ्रमरीकृतमानसः ।
रामदासगुरुः साक्षाद्भातिर्मे पुरतः सदा ॥ ३ ॥

### गुरुस्तवः ॥

रमारमणचिन्मात्रसमर्थानन्तमेरवे ।
सेतवे गुरवे नित्यं नमस्तस्मै महात्मने ॥ ४ ॥

योगिवर्यशिरोरत्नं तारकब्रह्मसद्गुरुः ।
तद्दृष्टिगोचराः सर्वे पुनते नात्र संशयः ॥ ५ ॥

यस्याङ्घ्रिस्मरणेनैव नाश्यन्ते पापराशयः ।

देशिकेन्द्रवरं वन्दे तारकब्रह्मसद्गुरुम् ॥ ६ ॥

कृपासिन्धुसमुद्भूतो ज्ञानचन्द्रोऽयमद्भुतः ।
देशिकेन्द्राव्ययत्वात्ते कृष्णपक्षेऽपि वर्धते ॥ ७ ॥

कोकैककोपनोद्दामपरिशोभितमस्तकः ।
भाति हार्दमये कोशे तारकब्रह्मशंकरः ॥ ८ ॥

सद्गुरुः स सुरैः सेव्यो मुक्तैरपि मुमुक्षुभिः ।
तारकब्रह्मवर्योऽसौ वेदान्तप्रतिपादकः ॥ ९ ॥

क्षीराब्धिकन्यकाकान्तपादसंजातजाह्नवी ।
पावनी भवतः स्पर्शात्सेवितः स तु सेतुराट् ॥ १० ॥

अम्भोधिकन्यकाजानिजायाभाग्यविवर्धनः ।
देशिकानुग्रहोदारो भाति मे पुण्यकर्मणा ॥ ११ ॥

देशिकानुग्रहोत्तुङ्गतरङ्गानन्दसागरे ।
निमज्जामि निराभासस्वप्रकाशैकवस्तुनि ॥ १२ ॥

सार्वभौमसुराराध्यपूजिताङ्घ्रिसरोरुहः ।
प्रत्यगात्मा सदा भाति तारकब्रह्मसद्गुरुः ॥ १३ ॥

सद्गुरोरीक्षणादेव दारिताखिलसंसृतिः ।
अप्रमेयो निराकारो जातोऽहं यदनुग्रहात् ॥ १४ ॥

पुरतो भाति योगीन्द्रस्तारकब्रह्मसद्गुरुः ।
यस्य प्रसादाल्लभते ह्यणिमाद्यष्टवैभवम् ॥ १५ ॥

आसनपरः ॥

शीतलसुमनउपवने
पद्मासनबद्धनासिकादृष्टिः ।
नादानन्दघनेऽस्मि-
न्देशिकदयया विराजते योगी ॥ १६ ॥

कुण्डलीपरः ॥

वसुनादगतज्योतिस्सच्चिदानन्दरूपिणी ।
सैव शक्तिर्महामाया कुण्डली प्रोच्यते बुधैः ॥ १७ ॥

शक्तिः कुण्डलिनी दिव्या योगानन्दपदं ददौ ।
वसिष्ठादिगरिष्ठानां मुनीनां योगिनामपि ॥ १८ ॥

परात्परतरं वस्तु सर्वाधिष्ठानमव्ययम् ।
भण्यते ब्रह्मविद्भिर्यत्तदेवाहं न संशयः ॥ १९ ॥

आखण्डलसहस्रांशुपरमेष्ठिकपर्दिनः ।
यत्सत्तामनुवर्तन्ते वासुदेवः स उच्यते ॥ २० ॥

अखण्डानन्दसान्द्रोऽयं स्वप्रकाशस्वरूपकः ।
यस्यांशलेशमात्रेण जीवन्ति प्राणिकोटयः ॥ २१ ॥

अनेकजन्मसाहस्रप्राक्पुण्यपरिपाकतः ।
अखण्डाकारवृत्त्या च गम्यमानः स्वयं बभौ ॥ २२ ।

अप्रमेयं सुराध्यक्षमखण्डानन्ददायकम् ।
वन्देऽहं हृदयाकाशे ह्यवाङ्मनसगोचरम् ॥ २३ ॥

निगमशिरःप्रतिपाद्यं निरवधिचैतन्यमद्वयानन्दम् ।
देशिकवरेशकृपया ब्रह्मैवास्मीति सर्वतः सिद्धम् ॥ २४ ॥

अहं ब्रह्मेति निश्चित्य अद्वैतानन्दभावतः ।
अनेकजन्मपापौघात्तारितो भवसागरात् ॥ २५ ॥

मधुरादिरसादीनां रसो यस्य रसाद्द्वहो ।
प्रोच्यते वेदवचसा रसो वै स इति स्फुटम् ॥ २६ ॥

अगमन्मे मनोनेत्रेत्यादिवृत्तिप्रकाशकः ।
कैवल्यैकस्वसंवेद्यः परिपूर्णोऽवशिष्यते ॥ २७ ॥

अहमेव जगन्मत्वा मदन्यन्नास्ति किंचन ।
वर्तते स भवेद्योगी बोधानन्दैकविग्रहः ॥ २८ ॥

ग्रन्थविचारः ॥

अकृत्रिममिदं ज्ञानं सर्वज्ञैः परिचक्ष्यते ।
ब्रह्मैवाहं च चिन्मात्रमहमेव शिवः सदा ॥ २९ ॥

मुद्रापरः ॥

विमलब्रह्मवर्येण कृतं स्वात्मनिरूपणम् ।
गीयते येन भक्त्या स प्राप्यते मोक्षवैभवम् ॥ ३० ॥

स्वात्मानन्दस्तोत्रं नित्यं यः पठति मानवो लोके ।
तस्य भवेत्किमलभ्यं कैवल्यं चापि करतले विद्धि ॥ ३१ ॥

इति श्रीविमलब्रह्मवर्यैर्विरचितं स्वात्मानन्दस्तोत्रं संपूर्णम् ।

---

## ॥ उपदेशशिखामणिः ॥

## 7745. UPADEŚAŚIKHĀMAṆIḤ

भज गौरीशं भज गौरीशं
भज गौरीशं मुग्धमते ।
भज गौरीशं भज गौरीशं
भज गौरीशं मुग्धमते ॥ १ ॥

सत्यं वद रे धर्मं चर रे
कृत्याकृत्यविचारं कुरु रे ।
कालो याति गृहीत्वा देहं
व्यर्थं मा कुरु मानुषजन्म ॥ २ ॥

पृष्ठे तिष्ठति मरणव्याघ्रः
पुरतस्तिष्ठति जन्मश्वभ्रम् ।
पार्श्वे तिष्ठति स जरानक्रो
व्याधिव्याळो गिलति शरीरम् ॥ ३ ॥

कामव्याधो देहारण्ये
तिष्ठति मानसहरिणं हन्तुम् ।
तं जय शत्रुं नो चेत्त्वामपि
बद्ध्वा नेतुं शक्तो भवति ॥ ४ ॥

दुर्जनसङ्गं मा कुरु मा कुरु
दारदपादपमिव दुष्फलदम् ।
कष्टं कष्टं चिन्तय चिन्तय
कलिमलनरके मग्नो भवसि ॥ ५ ॥

साध्यो वह्निर्हेतुर्धूमः
पक्षः शैलो मा कुरु तर्कम् ।
तत्साध्यस्त्वां दहति तदानीं
नाप्यनुमानं प्रत्यक्षं हि ॥ ६ ॥

मृतसंजीवनगुळिका रक्षति
कालाच्चापि भिषग्वरपथ्यम् ।
मृत्युंजयपदभक्तिं कुरुषे
यदि तं तीर्त्वा नित्यो भवसि ॥ ७ ॥

जायापुत्रा द्रव्यपरास्ते
नष्टे द्रव्ये वृद्धत्वे त्वम् ।
ज्ञास्यसि तेषां कृत्यं श्रद्धां
शेषाः किमु वद विहितं कर्तुम् ॥ ८ ॥

अष्टैश्वर्यप्रभुरपि वित्तं
कष्टं ज्ञात्वा त्यक्तदाशः ।
भिक्षार्थमरे चरति स्थाणु-
र्भयरहितं तं पश्य मुमुक्षो ॥ ९ ॥

मायामेघः पीत्वा वर्षति
भवजलधेस्तद्विषयविषाक्तम् ।
नीरं स्वप्नेऽपि त्वं न स्मर
नो चेद्दोषज्वरवान्भवसि ॥ १० ॥

मायावेश्या वञ्चयति त्वां
विषयाभिनयैर्विश्वविलासैः ।
प्रज्ञानधनं पालय नित्यं
तां प्रति विमुखो भव मुक्तोऽसि ॥ ११ ॥

दृश्यं सर्वं नश्वरमेत-
द्भावय सततं ज्ञाते तत्त्वे ।
सत्यज्ञानानन्दब्रह्म
त्वमसीत्येवं श्रुतिरपि पठति ॥ १२ ॥

नाभीकन्दे भुजगी सुप्ता
तामुत्थापय मरुदायामैः ।
ऊर्ध्वं गत्वा वर्षत्यमृतं
दशशतकमलार्कं पिब नित्यम् ॥ १३ ॥

प्राणस्पन्दाच्चित्तविकार-
श्चित्तविकाराद्विषयासक्तिः ।
विषयासक्त्या विविधगतिस्ते
तस्मात्प्राणनिरोद्धा भव रे ॥ १४ ॥

चिन्तय साम्बं चिन्मयदेहं
संचितकर्म त्वत्तो गलति ।
पञ्चनदीनां नाथोऽसि त्वं
प्रणतो भव रे परमशिवाङ्घ्रौ ॥ १५ ॥

कोमलबिल्वीदलपुष्पाद्यैः
कामरिपुं यज कलिमलशान्त्यै ।
श्रद्धाभक्तिध्यानसमेतो
निर्मलचित्तः सत्यं भवसि ॥ १६ ॥

जननत्राणसमर्थः साम्बः
शंकर एको ह्यास्ते सत्यम् ।
ध्यात्वा मुक्तो भवति शिवं यं
तं त्वं भावय हृदयाकाशे ॥ १७ ॥

त्यागेशपदानन्दसमुद्रे
भानुहिमांश्वोर्योगविशेषे ।
काले स्नात्वा पूतो भव रे
न पुनर्जननं न पुनर्जननम् ॥ १८ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण त्यागराजनाम्ना विरचिता उपदेशशिखामणिः संपूर्णोस्तु ।

---

## ॥ आत्मानुसंधानम् ॥

## 7746 & 47. ĀTMĀNUSAṂDHĀNAM.

त्र्यन्ततातिसंसिद्धशुद्धविद्यैकगोचरः ।
अनाद्यन्तः परात्मासौ जयत्यानन्दसुन्दरः ॥ १ ॥

श्रीमत्परशिवेन्द्रश्रीदेशिकानां वयं मुदा ।
अद्वैतानन्दमाध्वीकमङ्घ्रिपद्ममुपास्महे ॥ २ ॥

श्रीदेशिकोक्तवेदान्तनामसाहस्रमध्यगान् ।
कांश्चिन्नाममणीन्पद्यदामाभिर्ग्रथयाम्यहम् ॥ ३ ॥

अच्युतोऽहमनन्तोऽहमतर्क्योऽहमजोऽस्म्यहम् ।
अव्रणोऽहमकामोऽहमसङ्गोऽस्म्यभयोऽस्म्यहम् ॥ ४ ॥

अशब्दोऽहमरूपोऽहमस्पर्शोऽस्म्यहमव्ययः ।
अरसोऽहमगन्धोऽहमनादिरमृतोऽस्म्यहम् ॥ ५ ॥

अक्षरोऽहमलिङ्गोऽहमजरोऽस्म्यकलोऽस्म्यहम् ।
अप्राणोऽहममूर्तोऽहमचिन्त्योऽस्म्यकृतोऽस्म्यहम् ॥ ६ ॥

अन्तर्याम्यहमग्राह्योऽनिर्देश्योऽहमलक्षणः ।
अगोत्रोऽहममात्रोऽहमचक्षुष्कोऽस्म्यवागहम् ॥ ७ ॥

अदृश्योऽहमवर्णोऽहमखण्डोऽस्म्यहमद्भुतः ।
अश्रुतोऽहमदृष्टोऽहमन्वेष्टव्योऽमरोऽस्म्यहम् ॥ ८ ॥

अवायुरस्म्यनाकाशोऽतेजस्कोऽव्यभिचार्यहम् ।
अमतोऽहमजातोऽहमतिसूक्ष्मोऽविकार्यहम् ॥ ९ ॥

अरजस्कोऽतमस्कोऽहमसत्त्वोऽस्म्यगुणोऽस्म्यहम् ।
अमायोऽनुभवात्माहमनन्योऽविषयोऽस्म्यहम् ॥ १० ॥

अद्वैतोऽहमपूर्वोऽहमबाह्योऽहमनन्तरः ।
अश्रोत्रोऽहमदीर्घोऽहमव्यक्तोऽहमनामयः ॥ ११ ॥

अद्वयानन्दविज्ञानघनोऽस्म्यहमविक्रियः ।
अनिच्छोऽहमलेपोऽहमकर्तास्म्यहमक्षयः ॥ १२ ॥

अविद्याकार्यहीनोऽहमवाङ्मनसगोचरः ।
अनल्पोऽहमशोकोऽहमविकल्पोऽस्म्यतिज्वलन् ॥ १३ ॥

आदिमध्यान्तहीनोऽहमाधारोऽस्म्यहमाततः ।
आत्मचैतन्यरूपोऽहमहमानन्दचिद्धनः ॥ १४ ॥

आनन्दामृतरूपोऽहमात्मसंस्थोऽहमान्तरः ।
आप्तकामोऽहमाकाशात्पर आत्मेश्वरोऽस्म्यहम् ॥ १५ ॥

ईशानोऽस्म्यहमीड्योऽहमहमुत्तमपूरुषः ।
उत्कृष्टोऽहमुपद्रष्टाहमुत्तरतरोऽस्म्यहम् ॥ १६ ॥

केवलोऽहं कविः कर्माध्यक्षोऽहं करणाधिपः ।
गुहाशयोऽहं गुप्तोऽहं चक्षुषश्चक्षुरस्म्यहम् ॥ १७ ॥

चिदानन्दोऽस्म्यहं चेता चिद्धनश्चिन्मयोऽस्म्यहम् ।
ज्योतिर्मयोऽस्म्यहं ज्यायाञ्ज्योतिषां ज्योतिरस्म्यहम् ॥

तमसः साक्ष्यहं तुर्यात्तुर्योऽहं तमसः परः ।
दिव्यो देवोऽस्मि दुर्दर्शो द्रष्टा ध्येयो ध्रुवोऽस्म्यहम् ॥ १९ ॥

नित्योऽहं निरवद्योऽहं निष्क्रियोऽस्मि निरञ्जनः ।
निर्मलो निर्विकल्पोऽहं निराख्यातोऽस्मि निश्चलः ॥ २० ॥

निर्विकारो नित्यपूतो निर्गुणो निःस्पृहोऽस्म्यहम् ।
निरिन्द्रियो नियन्ताहं निरपेक्षोऽस्मि निष्कलः ॥ २१ ॥

पुरुषः परमात्माहं पुराणः परमोऽस्म्यहम् ।
परावरोऽस्म्यहं प्रज्ञाप्रपञ्चोपशमोऽस्म्यहम् ॥ २२ ॥

परामृतोऽस्म्यहं पूर्णः प्रभुरस्मि पुरातनः ।
पूर्णानन्दैकबोधोऽहं प्रत्यगेकरसोऽस्म्यहम् ॥ २३ ॥

प्रज्ञात्माहं प्रशान्तोऽहं प्रकाशः परमेश्वरः ।
बहुधा चिन्त्यमानोऽहमहं ब्रह्मादिवन्दितः ॥ २४ ॥

बुद्धोऽहं भूतपालोऽहं भारूपो भगवानहम् ।
महादेवो महानस्मि महाज्ञेयो महेश्वरः ॥ २५ ॥

विमुक्तोऽहं विभुरहं वरेण्यो व्यापकोऽस्म्यहम् ।
वैश्वानरो वासुदेवो विश्वतश्चक्षुरस्म्यहम् ॥ २६ ॥

विश्वाधिकोऽहं विशदो विष्णुर्विश्वकृदस्म्यहम् ।
शुद्धोऽस्मि शुक्रः शान्तोऽहं शाश्वतोऽस्मि शिवोऽस्म्यहम् ॥

सर्वभूतान्तरात्माहमहमस्मि सनातनः ।
सर्वेश्वरोऽहं सर्वज्ञः सूक्ष्मः सर्वगतोऽस्म्यहम् ॥ २८ ॥

अहं सकृद्विभातोऽहं स्वे महिम्नि प्रतिष्ठितः ।
सर्वान्तरः स्वयंज्योतिः सर्वाधिपतिरस्म्यहम् ॥ २९ ॥

सर्वभूताधिवासोऽहं सर्वव्यापी स्वराडहम् ।
समस्तसाक्षी सर्वात्मा सर्वभूतगुहाशयः ॥ ३० ॥

सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः ।
स्थानत्रयव्यतीतोऽहं सर्वानुग्राहकोऽस्म्यहम् ॥ ३१ ॥

सच्चिदानन्दपूर्णात्मा सर्वप्रेमास्पदोऽस्म्यहम् ।
सच्चिदानन्दमात्रोऽहं स्वप्रकाशोऽस्मि सद्घनः ॥ ३२ ॥

सत्यस्वरूपः सन्मात्रः सिद्धः सर्वात्मकोऽस्म्यहम् ।
सर्वाधिष्ठानसन्मात्रस्वात्मा बन्धहरोऽस्म्यहम् ॥ ३३ ॥

सर्वग्रासोऽस्म्यहं सर्वद्रष्टा सर्वानुभूरहम् ।
स्वतन्त्रोऽस्मि सुविस्पष्टः सुविभातोऽस्म्यहं हरिः ॥ ३४ ॥

अहं हरो हृदिस्थोऽहं हेतुदृष्टान्तवर्जितः ।
क्षेत्रज्ञः परमात्माहं श्रीमद्देशिकसूक्तितः ॥ ३५ ॥

इत्थमात्मानुसंधानपरो यः पुरुषो भवेत् ।
सोऽविद्याक्लेशनिर्मुक्तो ब्रह्मैव भवति स्वयम् ॥ ३६ ॥

इत्यात्मानुसंधानं समाप्तम् ॥

हरिः ओं श्रीमोष्ठीश्वराय नमः ॥

॥ सांमिश्रपञ्चीकरणम् ॥

7748 & 49. SAMMIŚRAPAÑCĪKARAṆAM.

॥ अथ सांमिश्रपञ्चीकरणम् ॥

अतः पञ्चीकृतपञ्चमहाभूतानां कार्योपादानाय परस्परं भूतमिश्रीकरणमाह ॥

ज्ञातृत्वं च तथा व्यानः श्रोत्रं वाचा तथैव च ।
शब्दो गगनतत्त्वानि कीर्त्यन्ते ब्रह्मवादिभिः ॥ १ ॥

मनः समानस्त्वक्त्वं पाणिः स्पर्शस्तथैव च ।
वायुतत्त्वानि कीर्त्यन्ते पञ्चधा ब्रह्मवादिभिः ॥ २ ॥

बुद्ध्युदानौ तथा चक्षुः पादौ रूपं तथैव च ।
वह्नितत्त्वानि कीर्त्यन्ते पञ्चधा ब्रह्मवादिभिः ॥ ३ ॥

चित्तापानौ तथा जिह्वा गुह्यं रसस्तथैव च ।
जलतत्त्वानि कीर्त्यन्ते पञ्चधा ब्रह्मवादिभिः ॥ ४ ॥

अहंप्राणौ तथा घ्राणं गुदं गन्धस्तथैव च ।
भूमितत्त्वानि कीर्त्यन्ते पञ्चधा ब्रह्मवादिभिः ॥ ५ ॥

एवं जातेषु भूतेषु प्रत्येकं विभजेद्द्विधा ।
चतुर्धा भिन्नमेकैकमर्धमर्धं तथा स्थितम् ॥ ६ ॥

व्योमार्धभागाश्चत्वारो वायुतेजःपयोभुवाम् ।
व्यानश्रोत्रवचःशब्दाः क्रमेण भूतमिश्रिताः ॥ ७ ॥
वाय्वर्धभागाश्चत्वारो व्योमतेजःपयोभुवाम् ।
बुद्बुदानाड्यभिरूपाश्च क्रमेण भूतमिश्रिताः ॥ ८ ॥
अम्भोर्धभागाश्चत्वारः खंवाय्वग्निभुवां तथा ।
चित्तापानौ तथा जिह्वारसौ भूतैश्च मिश्रिताः ॥ ९ ॥
भूम्यर्धभागाश्चत्वारः खंवाय्यवग्न्यम्भसामपि ।
अहंकारस्तथा प्राणघ्राणापानैश्च मिश्रिताः ॥ १० ॥
व्योमान्तःकरणांशाश्च व्योम्ना च भूतमिश्रिताः ।
वायोरंशाः समानादिवायवो भूतमिश्रिताः ॥ ११ ॥
ज्ञानेन्द्रियाणि वह्न्यंशा भूतान्तर्मिलितास्तथा ।
कर्मेन्द्रियाणि चावंशा भूतसंमिश्रितास्तथा ॥ १२ ॥
पृथिवीविषयाः पञ्च भूतान्तर्मिलितास्तथा ।
एकैकस्यैकमेकैकं पञ्चानां पञ्च चैव च ॥ १३ ॥
ऊर्ध्वो गुणः कारणत्वादधः कार्यानुवर्तने ।
मुख्यत्वेनापि स्वगुणः कल्पनैवमनुक्रमात् ॥ १४ ॥
पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ १५ ॥
दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रकान्तकाः ।
विष्णुश्चन्द्रश्चतुर्वक्त्रः क्षेत्रज्ञस्त्रिपुरान्तकः ॥ १६ ॥

तत्त्वं तत्त्वं समुत्पन्नमेकं पञ्च च पञ्चधा ।
जडं चैतन्ययोगेन सर्वं वीराद् समुद्भवेत् ॥ १७ ॥

पञ्चभूतविभागोऽयं कल्पितस्तत्त्वचिन्तकैः ।
एतत्कार्यं च ब्रह्माण्डं यत्र विश्वं प्रकल्पितम् ॥ १८ ॥

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ।
बोधार्थमेव शिष्याणां तत्त्वज्ञैः कल्पितं क्रमात् ॥ १९ ॥

पञ्चीकृतिरियं पञ्चभूतानां किल कल्पिता ।
एवं जानाति यो विप्रः स मुक्तो नात्र संशयः ॥ २० ॥

पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत् ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥ २१ ॥

पञ्चविंशद्गुणश्चैतत्स्वेच्छया विहरन्नपि ।
कदाचिदपि योनौ च न बद्धः पूज्य एव सः ॥ २२ ॥

इति सांमिश्रपञ्चीकरणं संपूर्णम् ॥

श्रीकृष्णार्पणमस्तु ॥

## ॥ नृसिंहध्यानम् ॥

## 7750. NṚSIṂHADHYĀNAM.

यदविद्याविलासेन भूतभौतिकसृष्टयः ।
तं नौमि परमात्मानं सच्चिदानन्दविग्रहम् ॥ १ ॥

यदन्तेवासिपञ्चास्यैर्निरस्ता भेदिवारणाः ।
तं नौमि श्रीनृसिंहाख्यं यतीन्द्रं परमं गुरुम् ॥ २ ॥

नैदाघभानुकिरणेष्विव वारिपूरः
सर्वो विभाति यदबोधवशात्प्रपञ्चः ।
मालाफणीव च निमीलति यत्प्रबोधा-
त्तद्ब्रह्म नौमि सुखमद्वयमात्मरूपम् ॥ ३ ॥

यस्मादभूदभवनानुभवात्सुखाब्धे-
र्विश्वं मरीचिमरुवारिसमं मुरारेः ।
तस्यालयो निखिललोकसुमङ्गलानां
पुण्यं वपुः प्रकटमस्तु ममार्धसिंहम् ॥ ४ ॥

यस्याज्ञावशवर्तिनोऽनुदिवसं ब्रह्मादिलोकाधिपा
यस्यानन्दशतांशभागिन इमे शक्रादयो निर्वृताः ।
तं सत्यानवधिप्रबोधवपुषं भूमानमाशास्महे
स्वान्ते श्रीनरसिंहमाग्रहवतां दूरं सतामन्तिके ॥ ५ ॥

यत्पादरेणुकणिकां सलिलं निपीय
　　मूकोऽपि मूकयति पण्डितमण्डलानि ।
सद्भागधेयममितस्वपदप्रबोधं
　　निर्धूतमोहविभवं गुरुमानतोऽस्मि ॥ ६ ॥

कल्याणगुणसंपूर्णं निर्वाणविभवालयम् ।
गीर्वाणेन्द्रसरस्वत्याश्चरणं शरणं भजे ॥ ७ ॥

श्रीमद्गुरुपदद्वन्द्वध्याननिर्धूतकल्मषः ।
कुर्वे तदाज्ञयाऽद्वैतदीपिकां भेदभेदिनीम् ॥ ८ ॥

श्रेयान्स्वधर्मो विगुणोऽपि यस्मा-
　　दित्यब्रवीत्पार्थसुहृत्सुरेशः ।
तस्मादहं साक्षिविवेकमादौ
　　गुरुप्रसादात्प्रकटीकरोमि ॥ ९ ॥

याजिज्ञासा यज्ञदानादिभिः स्या-
　　च्छ्रुत्या मत्या चिन्तया यत्प्रबोधः ।
यस्मिन्बुद्धे बाध्यतेऽनर्थमूलं
　　तं भूमानं भावये स्वस्वरूपम् ॥ १० ॥

चेतश्चापलमिन्द्रियार्थविषयं त्यक्त्वा भजस्वाभयं
　　संसारार्णवतारकं नरहरेः पादाब्जरेणुप्लवम् ।
यो ध्यातो दितिजेन्द्रबालकमधःसिन्धोर्गतं पर्वतै-
　　राक्रान्तं श्रितमुग्रभोगिभिरनायासेन पारेऽकरोत् ॥ ११ ॥

नरहरिवपुषा यो दारयन्दानवारेः
  प्रकटयति पुमर्थोऽभेदहृष्ट्याविरीशः ।
निजगुणमथ मायामात्रमात्रादिभेदो
  गुरुतरदयया मां पातु लक्ष्मीसहायः ॥ १२ ॥

मायासंभृतमानसेषु बहुधा यो बिम्बितो भासते
  ब्रह्मब्राह्मणदेवदैत्यपशुभिर्भास्वानिवाप्सु प्रभुः ।
यः स्वाभापहृताखिलाशुभवपुर्यो भौतिकज्योतिषां
  ज्योतिः श्रीपतये मृगेन्द्रवपुषे तस्मै परस्मै नमः ॥ १३ ॥

वेदान्तवनसंचारिनीलाचलगुहाशयम् ।
ज्योतिर्विराजते ध्वस्तमायावरणवारणम् ॥ १४ ॥

किं न त्वं नरसिंह एव यदि वा नाहं न नो चेत्कथं
  बन्धो मय्यखिलेश्वरे त्वयि विभो किं नास्ति मत्तः परः ।
भूयादर्थवदात्मबन्धहर इत्याद्यं वचोऽपौरुषं
  न त्वं नातदहं त्वमेव नृहरे भूयासमात्मंस्त्वयि ॥ १५ ॥

मृषामायाविद्यावृतमहिमनि ब्रह्मणि परे
  जगज्जालं जातं स्फुरति वियतीवोरुनगरम् ।
विरिञ्चश्रीशेशत्रिदशनरतिर्यग्गतभिदा
  कुतोऽतो भूमाहं निरवधिचिदानन्दघनचित् ॥ १६ ॥

सार्थानि वेदान्तवचांसि येन यो
  हिरण्यविद्विट् च सुदर्शनाश्रयः ।

प्रह्लाद उत्सर्पति यस्य चिन्तया
स मे नृसिंहो यतिराट् परा गतिः ॥ १७ ॥

यन्मायया पृथग्भूतः सदानन्दैकविग्रहः ।
हरिरप्यहमीशानं तं भजे पुरुषोत्तमम् ॥ १८ ॥

उपनिषदवबोधं बोधमानन्दकन्दं
निजगुणगणकान्तं कान्तमम्भोजयोनेः ।
परिहृतपरसत्त्वं सत्त्वमेतस्य मूलं
नरहरिवपुरैशं धाम कामं प्रपद्ये ॥ १९ ॥

गुरुचरणकृपा मे कञ्चुकीकुर्वती मां
नरहरिचरणेच्छां चारयत्यात्ममार्गे ।
अहमिति विगताधिः संचराम्यात्मयोग्यं
कपटमतिविलासैर्भेदिभिर्भिन्नमार्गे ॥ २० ॥

निरवधिनिर्मलवर्ति-
प्रकटनशीलप्रभो गुरोः स्नेहात् ।
औपनिषदात्मदीपः
कुरुतात्कल्याणकारिणीं विद्याम् ॥ २१ ॥

---

# ॥ अनुभवपञ्चविंशतिः ॥

## 7751 & 7752. ANUBHAVAPAÑCAVIṂŚATIḤ.

॥ श्रीमहादेवाय नमः ॥

अहो निरञ्जनः शान्तो बोधोऽहं प्रकृतेः परः ।
एतावन्तमहं कालमहंमोहविडम्बितः ॥ १ ॥

यथा प्रकाशयत्येको देही देहं जगत्तथा ।
अतो मम जगत्सर्वमभवन्न च किंचन ॥ २ ॥

सशरीरमहो विश्वं परित्यज्य मयाधुना ।
कुतश्चित्कौशलादेव परमात्मावलोक्यते ॥ ३ ॥

यथा न तोयतो भिन्नास्तरङ्गाः फेनबुद्बुदाः ।
आत्मनो न तथा भिन्नं विश्वात्मनि विनिर्गतम् ॥ ४ ॥

तन्तुमात्रो भवेदेव पटो यद्वद्विचारितः ।
आत्मतन्मात्रमेवेदं तद्वद्विश्वं विचारितम् ॥ ५ ॥

यथैवेक्षुरसोत्क्षिप्ता तेन व्याप्ता न शर्करा ।
तथा विश्वं मयि क्षिप्तं मया व्याप्तं निरन्तरम् ॥ ६ ॥

आत्माज्ञानाज्जगद्भ्रान्तिरात्मज्ञानान्न भासते ।
रज्ज्वज्ञानादहिभ्रान्तिस्तज्ज्ञानाद्भासते न हि ॥ ७ ॥

प्रकाशो मे निजं रूपं नातिरिक्तोऽस्म्यहं ततः ।
यदा प्रकाशते विश्वं तदाहं भास एव हि ॥ ८ ॥

अहो विकल्पितं विश्वमज्ञानान्मयि भासते ।
रूप्यं शुक्तौ फणी हारे वारि सूर्यकरे तथा ॥ ९ ॥

मत्तो विनिर्गतं विश्वं मय्येव लयमेति हि ।
मृदि कुम्भो जले वीचिः कनके कटको यथा ॥ १० ॥

अहो अहं नमो मह्यं विनाशो यस्य नास्ति मे ।
ब्रह्मादिस्तम्बपर्यन्तजगन्नाशेऽपि तिष्ठतः ॥ ११ ॥

अहो अहं नमो मह्यमेकोऽहं देहवानपि ।
क्वचिन्न गन्ता नागन्ता व्याप्य विश्वमवस्थितः ॥ १२ ॥

अहो अहं नमो मह्यं दक्षोऽहं नास्ति मत्समः ।
असंस्पृष्टशरीरेण येन विश्वं चिरं धृतम् ॥ १३ ॥

अहो अहं नमो मह्यं यस्य मे नास्ति किंचन ।
अथ वा यस्य मे सर्वं यद्वाङ्मनस्य गोचरः ॥ १४ ॥

ज्ञानं ज्ञेयं तथा ज्ञाता त्रितयं नास्ति वास्तवम् ।
अज्ञानाद्भाति यत्रेदं सोऽहमस्मि निरञ्जनः ॥ १५ ॥

द्वैतमूलमहो दुःखं नान्यत्तस्यास्ति भेषजम् ।
दृश्यमेतन्मृषा सर्वमेकोऽहं चिद्रसोऽमलः ॥ १६ ॥

बोधमात्रोऽहमज्ञानादुपाधिः कल्पितो मयि ।
एवं विमृशतो नित्यं निर्विकल्पस्थितं मम ॥ १७ ॥

सशरीरमहो विश्वं न किंचिदिति निश्चितम् ।
शुद्धचिन्मात्रमात्माहं तत्का स्यात्कल्पनाधुना ॥ १८ ॥

शरीरं स्वर्गनरकौ बन्धमोक्षौ सुखं तथा ।
कल्पनामात्रमेवैतत्किं कार्यं मे चिदात्मनः ॥ १९ ॥

अहो जनसमूहेऽपि न द्वयं पश्यतो मम ।
अरण्यमिव संवृत्तं क्व रतिं करवाण्यहम् ॥ २० ॥

नाहं देहो न मे देहो जीवो नाहमहं हि चित् ।
कल्पनामात्रमेवैतत्किं कार्यं मे चिदात्मनः ॥ २१ ॥

मय्यानन्दाम्बुधौ चित्तवातस्तस्मात्समुत्थितैः ।
अहो भुवनकल्लोलैर्विचित्रैर्भानमुत्थितम् ॥ २२ ॥

मय्यानन्दमहाम्भोधौ चित्तवाते प्रशाम्यति ।
अभाग्यजीववणिजो जगत्स्रोतोऽपि नश्वरम् ॥ २३ ॥

मय्यानन्दमहाम्भोधावाश्चर्यं जीववीचयः ।
उद्यन्ति घ्नन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥ २४ ॥

अहो मयि स्थितं विश्वं वस्तुतो न मयि स्थितम् ।
न मे बन्धोऽस्ति मोक्षो वा भ्रान्तिः शान्ता निराश्रया ॥

इत्यनुभवपञ्चविंशतिः समाप्ता ॥

## ॥ जीवन्मुक्तलक्षणम् ॥

## 7753. JĪVANMUKTALAKṢAṆAM.

श्रीगणेशाय नमः ॥

जीवः शिवसमायुक्तो ज्ञानाज्ञानसमासमः ।
एकानेकसमश्चैव जीवन्मुक्तः स उच्यते ॥ १ ॥

एक ब्रह्म जगत्सर्वमखण्ड भासत सदा ।
अनादि भान्ति भूतानि जीवन्मुक्तः स उच्यते ॥ २ ॥

एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।
आत्मवत्सर्वमेकं तु जीवन्मुक्तः स उच्यते ॥ ३ ॥

सर्वभूतसमं ब्रह्म भेदोऽभेदो न विद्यते ।
एकमेवाधिपश्यन्ति जीवन्मुक्तः स उच्यते ॥ ४ ॥

कर्माकर्म न पश्यन्ति सर्वकर्मविमोचकम् ।
निष्कर्म कर्म कर्तारं जीवन्मुक्तः स उच्यते ॥ ५ ॥

लोभमोहपरित्यक्त आशापाशविवर्जितः ।
सुखं दुःखं न जानाति जीवन्मुक्तः स उच्यते ॥ ६ ॥

कर्ममुक्तः क्रियामुक्तो नित्यमुक्तश्चिदात्मकः ।
कायमायापरित्यक्तो जीवन्मुक्तः स उच्यते ॥ ७ ॥

दिवारात्री न जानाति दारपुत्रादिकं समम् ।
दयातोषौ मृदु भाष्यं जीवन्मुक्तः स उच्यते ॥ ८ ॥

कामनाकार्यनिर्दोषः कार्याकार्यव्यवस्थितः ।
स्वहितात्मनि संतुष्टो जीवन्मुक्तः स उच्यते ॥ ९ ॥

गुणदोषापरिच्छिन्नो गुणागुणपरीक्षकः ।
गुणत्रयविहीनश्च जीवन्मुक्तः स उच्यते ॥ १० ॥

संतुष्टसकलावस्थो सदानन्दसुखात्मकः ।
सर्वलोकप्रियं भाष्यं जीवन्मुक्तः स उच्यते ॥ ११ ॥

पूर्णानन्दोऽहमस्मीति पूर्णानन्दोऽस्मि सर्वदा ।
पूर्णापूर्णतरं येन जीवन्मुक्तः स उच्यते ॥ १२ ॥

जाग्रत्स्वप्नमिव साक्षी साक्षी देहचतुष्टयम् ।
सर्वसाक्षी निरालम्बो जीवन्मुक्तः स उच्यते ॥ १३ ॥

एकात्मभावनादेव यदि भावं न हि न हि ।
लोकान्तश्चैवमेकान्तो जीवन्मुक्तः स उच्यते ॥ १४ ॥

शान्तिबुद्धी क्षमा पूर्णशान्तिर्दान्तिर्मुहुर्मुहुः ।
भक्तिभावं परित्यज्य जीवन्मुक्तः स उच्यते ॥ १५ ॥

आनन्दमखिलं सर्वमानन्देति चिदात्मकम् ।
आनन्दं परमानन्दो जीवन्मुक्तः स उच्यते ॥ १६ ॥

तत्पदस्य तदात्मानं त्वंपदस्य चिदात्मकम् ।
असिपदे सदा मग्नं जीवन्मुक्तः स उच्यते ॥ १७ ॥

निर्धूतं च निरापेक्षं जितसङ्गं जितेन्द्रियम् ।
प्रतापः पुरुषं येन जीवन्मुक्तः स उच्यते ॥ १८ ॥

प्रज्ञानं हृदयावर्तं विज्ञानं कृतमानसा ।
अज्ञानं शृङ्खलाच्छेद्यं जीवन्मुक्तः स उच्यते ॥ १९ ॥

दृश्यादृश्यसमं चैव दृष्टादृष्टसमं तथा ।
दर्शने बुद्धिः स्थातव्यं जीवन्मुक्तस्स उच्यते ॥ २० ॥

अयमात्मा चिदध्यक्षं अहमस्मीतिभावना ।
सर्वभावविहीनश्च जीवन्मुक्तः स उच्यते ॥ २१ ॥

अहंभावं न गृण्हीयादहंकर्ता कदाचन ।
अहंकारातीतमानं जीवन्मुक्तः स उच्यते ॥ २२ ॥

जीवन्मुक्त इति व्याख्या व्याख्यानं च परं पदम् ।
दत्तेन कथितं व्याख्या जीवन्मुक्तः स उच्यते ॥ २३ ॥

इति श्रीदत्तात्रेयमुनिविरचितं जीवन्मुक्तलक्षणं संपूर्णम् ॥
श्रीशिवार्पणमस्तु ।

## ॥ स्वप्नोदितम् ॥

## 7754 & 7755. SVAPNODITAM.

हरिः ओम् ॥

देशिकानुग्रहोत्तुङ्गतरङ्गशिशिराशयः ।
निवसामि निजानन्दपरिपूर्णैकभूमनि ॥ १ ॥

देशिकानुग्रहोत्तुङ्गमत्तमातङ्गमस्तकम् ।
आरुह्य विहराम्यात्मपदे समरसोज्ज्वले ॥ २ ॥

देशिकानुग्रहोत्तुङ्गगिरिशृङ्गमुपेयुषः ।
तृणवद्भाति मे सर्वं जगदत्यल्पमाततम् ॥ ३ ॥

देशिकानुग्रहोदारग्रहग्रस्तात्मवानहम् ।
न किंचिदपि जानामि जगदेतच्चराचरम् ॥ ४ ॥

देशिकानुग्रहोदारवेत्रोदस्तमनोग्रहः ।
विजानामि जगत्सर्वमात्ममात्रतयाधुना ॥ ५ ॥

देशिकानुग्रहोदारतरणिप्रसरोद्भवे ।
स्वानन्दैकरवं वीक्षे समुल्लसितमद्भुतम् ॥ ६ ॥

देशिकानुग्रहोदारतुषारकिरणोदये ।
आश्चर्यमान्तराम्भोजमुन्निद्रमभवन्मम ॥ ७ ॥

देशिकानुग्रहोदारदावानललता भृशम् ।
दग्ध्वाऽशेषं जगज्जालमलं मां शीतयत्यहो ॥ ८ ॥

देशिकानुग्रहोदाररवितप्तमनोमरौ ।
स्वानन्दकन्दलः कश्चिदाश्चर्यमुदभूद्भृशम् ॥ ९ ॥

देशिकानुग्रहोदारसमीरे वाति सर्वतः ।
मम चित्तमहाम्भोधिश्चितं न स्पन्दते कुतः ॥ १० ॥

देशिकानुग्रहोदारदारैः संततसाङ्गिनः ।
मम भावे मनो लीनं निवृत्ताशेषवृत्तिकम् ॥ ११ ॥

देशिकानुग्रहोदारपीताम्बरधरस्य मे ।
शीततापादिभिर्दुःखं कथं संगो भविष्यति ॥ १२ ॥

देशिकानुग्रहोदारसाम्राज्याधिपतेर्मम ।
अशेषमभवद्वश्यमतः किमविशेषतः ॥ १३ ॥

देशिकेन्द्रकृपाखड्गखण्डिताशारिमण्डलः ।
अखण्डितनिजानन्दमण्डले निवसाम्यहम् ॥ १४ ॥

देशिकेन्द्रकृपाखड्गकृत्तचित्तमृगोत्तमः ।
भ्रान्तभीतिश्चराम्यन्तरात्मकान्तारसंततौ ॥ १५ ॥

देशिकेन्द्रकृपाखड्गविलूनेऽज्ञानपादपे ।
संसारघोरवेतालः क्व गतो वा न वेद्म्यहम् ॥ १६ ॥

देशिकेन्द्रकृपाचन्द्रचन्द्रिकाशीतलाकृतिः ।
संसारसौरसंतापं नैवाहं वेद्मि किंचन ॥ १७ ॥

देशिकेन्द्रकृपाचन्द्रसमेधितचिदम्बुधौ ।
निमग्नोऽहं न पश्यामि स्वभिन्नं वस्तु किंचन ॥ १८ ॥

देशिकेन्द्रकृपाचन्द्रनिरस्तानतस्तमस्ततिः ।
किमप्यहं न पश्यामि किमाश्चर्यमभूदिह ॥ १९ ॥

देशिकेन्द्रकृपाचन्द्रप्रफुल्लानन्दकैरवम् ।
आघ्रायाघ्राय हृष्यामि स्वात्मन्येव मुहुर्मुहुः ॥ २० ॥

देशिकेन्द्रकृपाचन्द्रद्रुतचन्द्रोपलान्तरः ।
विश्रान्तिमाप्तवानस्मि विज्ञानैकरसे पदे ॥ २१ ॥

कृतार्थोऽस्मि कृतार्थोऽस्मि देशिकानुग्रहादहम् ।
अतः सर्वे जना यूयमुपाद्ध्वं देशिकोत्तमम् ॥ २२ ॥

इति स्वप्नोदितां निष्ठामनुस्मरति यः पुमान् ।
सोऽसौ सत्यपरानन्दपदवीं याति पावनीम् ॥ २३ ॥

॥ हरिः ॐ ॥

## ॥ पञ्चीकृतम् ॥

## 7756. PAÑCĪKṚTAM.

पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं सर्वं विराडित्युच्यते। एतत्स्थूलशरीरमात्मनः। आत्मन इन्द्रियैरर्थोपलब्धिजागरितम्। तदुभयाभिमान्यात्मा विश्वम्। एतत्त्रयमकारः। अपञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सप्तदशकं लिङ्गं भौतिकं हिरण्यगर्भ इत्युच्यते। एतत्सूक्ष्मशरीरमात्मनः। करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्नः। तदुभयाभिमान्यात्मा तैजसः। एतत्त्रयमुकारः। शरीरद्वयकारणमात्माज्ञानं साभासमव्याकृतमित्युच्यते। तच्च न सन्नासन्नापि सदसन्न भिन्नं नाभिन्नं नापि भिन्नाभिन्नं कुतश्चिन्न निरवयवं न सावयवं नोभयं केवलं ब्रह्मैकत्वज्ञानापनोद्यं सर्वप्रकारं ज्ञानोपसंहारो बुद्धेः कारणात्मनावस्थानं सुषुप्तम्। तदुभयाभिमान्यात्मा प्राज्ञः। एतत्त्रयं मकारः। अकारउकारमकारोऽहमेवाहं साक्षीचिन्मात्रस्वरूपो नाज्ञानं तत्कार्यं वा। किं तु नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयं ब्रह्मैवाहमस्मि। अहं ब्रह्मेत्यभेदेनावस्थानं समाधिः 'अयमात्मा ब्रह्म'इत्यादिश्रुतिभ्यः। जायतेऽस्ति विपरिणमते विवर्धतेऽपक्षीयते विनश्यतीति षड् भावविकाराः। अशनायापिपासाशोकमोहजरामरणानि षडूर्मयः। अस्ति नास्ति नास्तीत्येताश्चतु-

ष्कोटयः हेयाज्ञेया पापाख्यापि चतुष्कोट्यन्तरम् । आत्मनानात्मा नोपादीयते न त्यज्यते स्वात्मविक्रियाविरोधात् । अनात्मनात्मा नोपादीयते न त्यज्यते अद्वयत्वादात्मनः । आत्मना वाऽन्यदनात्मा नोपादीयते न त्यज्यते अक्रियत्वादात्मन इति ॥

पञ्चीकृतः समाप्तः ॥

---

## ॥ पञ्चीकृतटीका ॥

## 7757. PAÑCĪKṚTAṬĪKĀ.

सच्छब्दवाच्यमविद्याशबलं ब्रह्म । तस्मादाकाशवायुतेजोबन्नानि महाभूतानि क्रमेण जातानि । सत आकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी । एवमेतानि पञ्चीकृतपञ्चमहाभूतानि । तत्कार्यं सप्तदशलिङ्गमुत्पन्नम् । वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि । श्रोत्रं त्वक्चक्षुर्जिह्वा घ्राणमिति पञ्च बुद्धीन्द्रियाणि । प्राणापानव्यानोदानसमाना इति पञ्च वायवः । मनो बुद्धिरहंकारश्चित्तमित्यन्तःकरणचतुष्टयम् । संशयात्मकं मनो निश्चयात्मिका बुद्धिरित्येकमेवान्तःकरणमुभयथा व्यपदिश्यते । क्रियाभेदात्मा च कलालवकादिवदित्येतत्सूक्ष्मशरीरं लिङ्गमित्यु-

च्यते। अपञ्चीकृतपञ्चमहाभूतानि तत्कार्यं सप्तदशकं लिङ्गं हिरण्यगर्भः। तत्सूक्ष्मशरीरमात्मनः। श्रुतिसिद्धानि पञ्चीकृतपञ्चमहाभूतानि। तेभ्य उत्पन्नमधिदैवं ब्रह्माण्डमध्यात्ममधिभूतं च करशिरश्चरणादिमल्लोकप्रसिद्धं स्थूलशरीरं जातम्। एतानि पञ्चीकृतपञ्चभूतानि। तत्कार्यं ब्रह्माण्डम्। प्राणिनां स्थूलशरीरजातं सर्वं विराडुच्यते। तत्स्थूलशरीरमात्मनः। एकमेव स्थूलशरीरं विराडाख्यम्। एकमेव सूक्ष्मशरीरं हिरण्यगर्भाख्यम्। एवं शरीरद्वयाभिमानी जीवस्त्वंपदार्थः। सच्छब्दवाच्यं ब्रह्मैव। शरीरद्वयप्रविष्टं जलसूर्यवद्घटाकाशवच्च प्राणधारणक्रियायोगात् जीव इत्युच्यते। स च जीवो जाग्रत्स्वप्नसुषुप्तिव्यतिरिक्तो निर्गुणो निरवयवो निःसङ्गो नित्यः शुद्धः परमानन्दाद्वयश्च भावः परमात्मैव त्रिष्वपि कालेषु सन्नप्यन्तःकरणसंनिधानाज्जाग्रत्स्वप्नसुषुप्तीनि अन्तःकरणस्थानि क्रियाकारकफलानि चाविकृतः पश्यति। इन्द्रियैरर्थोपलब्धिर्जागरितं स्थूलकर्मनिमित्तं। करणेषूपसंहृतेषु जागरितसंस्कारजः क्षुद्रकर्मनिमित्तवासनारूपहस्त्यादिविषयः स्वप्नम्। स्थूलक्षुद्रकर्मद्वयोपरमे तत्कृतजागरितस्वप्नप्रत्ययद्वयोपरमाद्वटकणिकायामिव वटवृक्षावस्थानमन्तःकरणस्थसच्छब्दवाच्ये ब्रह्मणि मायाविनि शबले कारणात्मनावस्थानं सुषुप्तिः। एवमेतानि जागरितस्वप्नसुषुप्तिस्थानानि। जीवः क्रमतोऽक्रमतश्चापश्यत्येवाचार्यपूर्वं

समाध्यारम्भकाले मुमुक्षुः पश्चान्निश्चलेऽन्तःकरणजाते क्षेत्रजातं सर्वं क्रमेण प्रविलापयेत् ॥ क्षेत्रज्ञं च परिशेषयेत् । पञ्चीकृतपञ्चमहाभूतेभ्यो यदुत्पन्नमण्डादि तत्सर्वं पञ्चीकृतपञ्चमहाभूतव्यतिरेकेण नास्ति । यथा मृद उत्पन्नो घटो मृद्व्यतिरेकेण नास्ति तत्कार्यत्वात् । एवं पञ्चीकृतपञ्चमहाभूतानि अपञ्चीकृतपञ्चमहाभूतव्यतिरेकेण न सन्ति तत्कार्यत्वात् । इदानीं हिरण्यगर्भमात्रं सूक्ष्मशरीरं परिशिष्टम् । तत्रापि सप्तदशकालिङ्गं अपञ्चीकृतपञ्चमहाभूतव्यतिरेकेण नास्ति तत्कार्यत्वात् इदानीमपञ्चीकृतमहाभूतानि परिशिष्टानि । तत्रापि अन्नशब्दवाच्यव्याप्तपृथिवी उदकव्यतिरेकेण आकाशशब्दव्यतिरेकेण मायाविशुद्धव्यतिरेकेण इदानीमन्तःकरणमात्राज्जाग्रत्स्वप्नसुषुप्तानामभावे जीवत्ववर्जितप्रत्यगात्मचैतन्यस्वभावो नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयस्वभावं ब्रह्मैवाहमस्मि । अहमेव ब्रह्मेति तप्तपरशुग्रहणपर्यन्तं दार्ढ्योपेतः । तत्त्वमसीति वाक्यार्थं करतलविन्यस्तामलकफलवदनुभवफलपर्यन्तेन ज्ञानेन स स मुच्यते । 'एवमाचार्यवान् पुरुषो वेद । तस्य तावदेव चिरम् ।' इति श्रुतेः

इति पञ्चीकृतटीकासमाप्ता । शुभं भवतु ॥

श्रीशिवार्पणमस्तु ॥

॥ प्रणवार्थप्रकाशिका ॥

7758. PRAṆAVĀRTHAPRAKĀŚIKĀ

श्रीसाम्बपरमेश्वराय नमः ।

श्रीकृष्णाय नमः ॥

समास्थितः सप्तमयोगभूमिका-
मपारगम्भीरसुखामृताम्बुधिः ।
सतां गुरुः सद्गुणसागरो मुहु-
र्मया शिवानन्दयतीश्वरो नतः ॥ १ ॥

ॐ ॥ अकारोकारवर्णाभ्यां मातत्योत्कर्षधर्मिणम् ।
प्रत्यञ्चं संस्मरेन्मार्थं ब्रह्म चैक्यं तथोमिति ॥ २ ॥

अजाद्यात्मकमात्मानमकारार्थं परेश्वरम् ।
उवर्णपूर्वभागार्थमुत्कृष्टाद्यात्मकं मुहुः ॥ ३ ॥

उवर्णोत्तरभागार्थं तं विदुर्व्यवहारतः ।
मार्थमुक्तमहानन्दाद्यात्मप्रत्यक्तथोमिति ॥ ४ ॥

इत्यजोत्कृष्टमुक्तादिशब्दैकांशाक्षरात्मना ।
एकेन प्रणवेनैक्यं जानीयाद्व्यतिहारतः ॥ ५ ॥

अथवाकारमात्मानमुकारं च जगद्गुरुम् ।
अवधारणसंयुक्तमेकीकुर्यादथोमिति ॥ ६ ॥

अहंशब्दैकदेशत्वाद्ब्रह्मशब्दैकदेशतः ।
अनयोरेकदेशत्वाद्ब्रह्माकारेण च स्मरेत् ॥ ७ ॥

साक्षित्वान्मनआदीनां मकारेण तु साक्षिणम् ।
सावधारणमैक्यार्थमेवमोमिति पश्यति ॥ ८ ॥

उक्ते स्वात्मन्यवस्थानात्कथंचित्प्रच्युतो यदि ।
आत्मानं त्रिशरीरं त्रिशरीरं ब्रह्म चिन्तयेत् ॥ ९ ॥

स्थूलत्वात्स्थूलभुक्त्वाच्च सूक्ष्मत्वात्सूक्ष्मभुक्त्वतः ।
ऐक्यादानन्दभोगाच्च तुर्यैकत्वं च चित्त्वतः ॥ १० ॥

विश्वतैजसकप्राज्ञतुर्यैश्च चतुरात्मकैः ।
वैश्वानराद्यभिन्नं तं चतुष्पादं विचिन्तयेत् ॥ ११ ॥

परादिरूपाकारेण विश्वो वैश्वानरात्मकः ।
चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिरुच्यते ॥ १२ ॥

हिरण्यगर्भाभिन्नश्च तैजसश्चतुरात्मकः ।
उच्यते पूर्ववत्त्वोंकारेण चतुरात्मना ॥ १३ ॥

प्राज्ञस्तथेश्वराभिन्नचतुरात्मा निगद्यते ।
चतूरूपमकारेण जगद्बीजोपधानकः ॥ १४ ॥

ओतानुज्ञानुज्ञाना(?)विकल्पप्रणवेन तु ।
तादृशेनोच्यते साक्षी स्वप्रकाशचिदात्मकः ॥ १५ ॥

वाचैरथात्मपादैस्तु मात्राणां चोंकृतेर्यतिः ।
एकत्वं चिन्तयेत्प्राज्ञो युगपद्द्वयसिद्धये ॥ १६ ॥

स्थूलं सूक्ष्मे च तद्बीजे मात्राभिः प्रविलापयेत् ।
कारणं चोंकृतेरोताद्यात्मना चिन्तयन्ग्रसेत् ॥ १६ ॥

य इत्थं प्रणवस्यार्थं गुरोर्ज्ञात्वा यतिर्भवेत् ।
स्वात्मनिष्ठः स मुक्तः स्यादत्रैवानन्दवारिधिः ॥ १७ ॥

हरिः ओं ॥ ऐरावतेश्वराय नमः
श्रीविश्वनाथाय नमः ॥

---

## ॥ साधनचतुष्टयसंपत्तिः ॥

### 7759. SĀDHANACATUṢṬAYASAṂPATTIḤ.

अथशब्दार्थः साधनचतुष्टयमुच्यते नित्यानित्यवस्तुविवेक इहामुत्रार्थफलभोगविरागः शमदमादिसंपत्तिर्मुमुक्षुत्वं चेति । ब्रह्म नित्यं सकलं जगदनित्यमिति नित्यानित्यवस्तुविवेकः । 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतिः । यथा इह भूलोके कर्मणा चितः संपादितः पुत्रमित्रकलत्रादिलक्षणो लोकः जनः क्षीयते नश्यति एवमेवामुत्र स्वर्गादिलोकेष्वपि पुण्येन चितः संपादितः लोकः जनः क्षीयत इति तदर्थः । 'परीक्ष्य लोकान्

कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतिः । कर्मणा चितान् संपादितान् चतुर्दश लोकान् लोकस्थान् जनान् परीक्ष्य अनित्यत्वेन निश्चित्य ब्राह्मणः ब्रह्मसाक्षात्कारकामः निर्वेदं वैराग्यम् आयात् प्राप्नुयात् । अकृतो मोक्षः कृतेन कर्मणा नास्ति न संपद्यते । तस्मात्कारणात् तद्विज्ञानार्थं ब्रह्मज्ञानार्थं श्रोत्रियं साङ्गवेदाध्ययनवन्तं ब्रह्मनिष्ठं ब्रह्मसाक्षात्कारवन्तं गुरुं समित्पाणिः यथायोग्यं समिद्दन्तकाष्ठादिपाणिः सन् अभिगच्छेत् एतादृशगुरुनिकटं प्राप्नुयादित्यर्थः । 'शान्तो दान्तः उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येत् ।' शान्तः अन्तरिन्द्रियमनोनिग्रहवान् दान्तः बहिरिन्द्रियचक्षुरादिनिग्रहवान् उपरतः सकलविषयाभिलाषरहितः तितिक्षुः शीतोष्णसुखदुःखमानावमानादिद्वन्द्वसहिष्णुः ब्रह्मविषयिणी श्रद्धैव वित्तं यस्य सः एवंविधविशेषणविशिष्टो भूत्वा आत्मनि विशुद्धान्तःकरणे प्रतिबिम्बितम् आत्मानं परमात्मानं साक्षात्कुर्यादित्यर्थः । मुमुक्षुत्वं मोक्षेच्छा ।

इत्यात्मनि साधनचतुष्टयसंपत्तिः

समाप्ता ॥

---

## ॥ सप्तश्लोकीप्रकरणम् ॥

## 7760. SAPTAŚLOKĪPRAKARAṆAM.

आत्माश्रयात्मविषयं भावरूपमनादि च ।
अज्ञानं बाध्यमानत्वान्न सदित्युच्यते बुधैः ॥

नासत्प्रतीयमानत्वाज्जगन्निर्वाहकत्वतः ।
परस्परविरोधेन न भवेत्सदसच्च तत् ॥

सदादिभ्यो विभिन्नं तद्धर्म्यादेरनिरूपणात् ।
उक्तदोषत्रयापत्तेरभिन्नं च न तद्भवेत् ॥

परस्परविरोधेन भिन्नाभिन्नं न तद्भवेत् ।
न सावयवहीनं तत्कार्येष्ववयवान्वयात् ॥

न च सावयवं तत्स्यान्मूलकारणताबलात् ।
मिथो विरोधादुभयात्मकत्वं नैव संभवेत् ॥

तस्मिन्नेव चिदाभासे सुस्थितं कृत्यपञ्चकम् ।
सत्कृत्य तत्सदाध्यस्तं प्रत्यगद्वयचिद्घने ॥

निरपेक्षशिवात्मैक्यज्ञानस्योदयमात्रतः ।
सकार्यमेतदज्ञानं नासीदस्ति भविष्यति ॥

इति सप्तश्लोकप्रकरणं समाप्तम् ।

———

## ॥ भिक्ष्वष्टकम् ॥

## 7761. BHIKṢVAṢṬAKAM.

गङ्गातरङ्गतीरं ध्रुवमाश्रयन्तः
सङ्गापनोदं परिशीलयन्तः ।
तुरंगशृङ्गान्समुपाश्रयन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ १ ॥

कामाद्यरातीन्परिभावयन्तो
भामादिभोगानपि दूरयन्तः ।
वामान्द्रुमूलान्समुपाश्रयन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ २ ॥

ब्रह्मात्मभावैकसुधां पिबन्तो
माहेश्वरं श्रीमनुमामनन्तः ।
मायां महाजालमयीं त्यजन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ ३ ॥

तीर्थानि सर्वाणि च तीर्थयन्तो
मुक्तिं परां केवलमर्थयन्तः ।
स्वीयानि नामानि यथार्थयन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ ४ ॥

भिक्षां क्षुधामात्रहरामटन्तो
  रक्षां जनानां निगमै रटन्त ।
साक्षात्परोक्षेऽपि परे रमन्तः
  कौपीनवन्तः खलु भाग्यवन्तः ॥ ५ ॥

गुर्वर्पिताज्ञामनुपालयन्तः
  सर्वं चिदेवेति विलोकयन्तः ।
सर्वंसहां च क्षमया जयन्तः
  कौपीनवन्तः खलु भाग्यवन्तः ॥ ६ ॥

आशास्वनन्तासु भृशं भ्रमन्त
  आशां समूलामवमानयन्तः ।
ईशाङ्घ्रिपद्मे सततं रमन्तः
  कौपीनवन्तः खलु भाग्यवन्तः ॥ ७ ॥

चिन्तां दुरन्तां परिहर्तुमन्त-
  श्चिन्तां भवस्यात्मपरां भजन्तः ।
स्वान्ते नितान्तं स्वगुरून्स्मरन्तः
  कौपीनवन्तः खलु भाग्यवन्तः ॥ ८ ॥

श्रीदक्षिणामूर्तिकटाक्षवीक्षा-
  लक्षीकृतेनागमदक्षिणेन ।
श्रीसच्चिदानन्दमुनीश्वरेण
  भिक्ष्वष्टकं दीपितमार्यभक्त्या ॥ ९ ॥

प्रत्यूषकाले पठतां जनानां
  प्रत्याहतिः कास्ति नु तद्गतानाम् ।

ब्रह्मादिलोकानपि तुच्छयन्तो
निर्वाणसाम्यं ननु ते लभन्ते ॥ १० ॥

---

## ॥ आत्मतत्त्वम् ॥

## 7762. ĀTMATATTVAM.

ओं नमः सर्वमङ्गलमूर्तये श्रीकृष्णाय ॥

श्री शुक उवाच—

आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवानृतम् ।
ब्रह्मणे दर्शयन्पश्यन्नव्यलीकमृताभृतौ ॥ १ ॥

सृजामि तपसैवेदं ग्रसामि तपसा पुमान् ।
बिभर्मि तपसा विश्वं वीर्यं मे दुस्तरं तपः ॥ २ ॥

श्री भगवानुवाच—

ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ।
सरहस्यं तदङ्गं च ग्रहणाद्गदितं मया ॥ ३ ॥

यावानहं यथाभावो यद्रूपगुणकर्मकः ।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ ४ ॥

अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ५ ॥

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत आत्मनि ।
तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥ ६ ॥

शुक उवाच—

यथा महान्ति भूतानि भूतेषूच्चावचेषु तु ।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ ७ ॥

एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ।
अन्वयव्यतिरेकाभ्यां यः स्यात्सर्वत्र सर्वदा ॥ ८ ॥

एतन्मतं समातिष्ठ परमेण समाधिना ।
भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ९ ॥

ब्रह्मीब्रह्मविवर्त्तमूलप्रकृती माया अविद्यावशे
चैतन्यप्रतिबिंबभासत असे जीवेश्वराकारसे ।
द्वन्द्वी देहचतुष्टयपृथक्कताऽब्रह्माण्डापिण्डान्वये
ऐसी व्यष्टिसमष्टिसृष्टिप्रातिभा निर्द्वन्द्व आत्मा स्वयम् ॥

---

## ।। मनोलयप्रकरणम् ।।

## 7763 & 64. MANOLAYAPRAKARAṆAṂ.

अन्तर्निष्ठो भवेद्योगी अन्तर्निष्ठः सदा सुखी ।
अन्तर्निष्ठस्तपोनिष्ठः अन्तर्भावं सदा कुरु ।।

मनोमूलं न जानाति मूर्खो भवति पण्डितः ।
मनोमूलं भवेद्ब्रह्ममेवं जानाति पण्डितः ।।

मनोमूलं भवेद्ब्रह्म ब्रह्ममूलमिदं जगत् ।
कथं ध्याता कथं ध्येयं ब्रह्मैवाहं न संशयः ।।

देहमध्ये स्थितं ब्रह्म कथं मूढ न पश्यसि ।
मूढात्मा देहभावात्मा देहं सत्यं कथं भवेत् ।।

जीवात्मा देहसंबद्धो देहातीतः परो मतः ।
सर्वं खलु इदं ब्रह्म इति मे निश्चिता मतिः ।।

देहमध्ये स्थितं ब्रह्म कथं मूढ न पश्यसि ।
वाचा जल्पो वृथाऽर्थं तु निःशब्दं ब्रह्म उच्यते ।।

माया ब्रह्म कथं भिन्नं सूर्यरश्मी तथैव च ।
पुष्पगन्धं कथं भिन्नं जलतरंगं तथैव च ।।

ब्रह्मरूपमिदं सर्वं ब्रह्मैवाहं न संशयः ।
मनोलयं भवेद्ब्रह्म ब्रह्ममूलमिदं जगत् ।।

ब्रह्मनिष्ठो भवेद्योगी ब्रह्मनिष्ठः शिवात्मकः ।
ब्रह्मनिष्ठं शुचिष्मन्तं पवित्रमिदमुत्तमम् ॥

इति मनोलयप्रकरणं समाप्तम् ।

---

॥ ब्रह्मनिरामयाष्टकम् ॥

7765. BRAHMANIRĀMAYĀṢṬAKAM.

ओम् ॥

एवं सर्वश्चिदानन्द आदिमध्यान्तवर्जितः ।
पूर्ण आत्मप्रकाशं च सोऽहं ब्रह्म निरामयम् ॥ १ ॥

एकमेव निराभासमभासं रूपवर्जितम् ।
भावाभावविहीनं च सोऽहं ब्रह्म निरामयम् ॥ २ ॥

निर्गुणं परमं ब्रह्म सच्चिदानन्दमद्वयम् ।
तत्त्वमस्यादिवाक्येन सोऽहं ब्रह्म निरामयम् ॥ ३ ॥

एकमेवाद्वितीयं च नामरूपविवर्जितम् ।
एकमेव समं तत्त्वं सोऽहं ब्रह्म निरामयम् ॥ ४ ॥

आत्मतत्त्वमयं नित्यमेकमेवातिनिर्मलम् ।
पूर्णब्रह्मनिराभासं सोऽहं ब्रह्म निरामयम् ॥ ५ ॥

एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।
अहमेव निराकारं सोऽहं ब्रह्म निरामयम् ॥ ६ ॥

अव्यक्तं च वचोतीतमखण्डं खण्डवर्जितम् ।
निराधारं परं ब्रह्म सोऽहं ब्रह्म निरामयम् ॥ ७ ॥

अक्षरं परमं ब्रह्म द्वैताद्वैतविवर्जितम् ।
मुनीश्वरहितं तत्त्वं सोऽहं ब्रह्म निरामयम् ॥ ८ ॥

इति श्रीब्रह्मनिरामयाष्टकं संपूर्णम् ॥

जलेऽग्निश्च करेऽग्निश्च ब्रह्माग्निश्चाभिमन्त्रितः ।
अग्नित्रयप्रदानेन शुद्धो भाति कमण्डलुः ॥

कमण्डलुमहातीर्थे त्रिवेणीसंगमे भवम् ।
महानदीमहातीर्थं पुण्यस्यैकपरायणम् ॥

---

## ॥ ऊर्मिषट्कम् ॥

## 7766. ŪRMIṢAṬKAM.

ब्राह्मण्यं प्राप्य लोकेऽस्मिन्न मूको बधिरो यदि ।
न च क्रामति संसारात्स खलु ब्रह्महा भवेत् ॥ १ ॥

अप्येतियोऽशनायादीन्विचारेण निरूप्यते ।
क्षुधादिसाक्षी तस्यास्य ब्रह्मत्वं केन वार्यते ॥ २ ॥

नन्वेक आत्मा मूढानां विदुषां चेति ते मतम् ।
उक्तोर्मिषट्के तत्त्वं तत्पतं चान्यतत्कथम् (?) ॥ ३ ॥

अविचाराविचाराभ्यां यथा सर्पत्वरज्जुवत् ।
तथाचात्मन्यसंसारे भावाभावावितीर्यताम् ॥ ४ ॥

क्षुत्पिपासे प्राणधर्मौ शोकमोहौ तु मानसे ।
जरामृत्यू स्थूलदेह आत्मधर्मो न कश्चन ॥ ५ ॥

प्राणसंचारबाहुल्याद्गमनादिश्रमे सति ।
क्षुत्पिपासाजनिस्तेन प्राणधर्मत्वमेतयोः ॥ ६ ॥

इष्टस्य वस्तुनोऽसिद्धौ चेतसो यानवस्थितिः ।
स शोको मनसो धर्मो मोहश्च विषयभ्रमः ॥ ७ ॥

जरा देहस्य शैथिल्यं मृत्युः प्राणवियुक्तता ।
ते सर्वे ह्यात्मनि भ्रान्त्या कल्पिता व्योमनैल्यवत् ॥ ८ ॥

———

## ॥ अनुभवसोपानम् ॥

## 7767. ANUBHAVASOPĀNAM.

श्रीरस्तु ।

शास्त्राचार्योपदेशेन तर्कैः शास्त्रानुसारिभिः ।
सर्वसाक्षितयात्मानं सम्यङ् निश्चित्य सुस्थिरम् ॥ १ ॥

स्वात्मनोऽन्यतया भातं समस्तमविशेषतः ।
स्वात्ममात्रतया बुद्ध्वा पुनः स्वात्मानमद्वयम् ॥ २ ॥

शुद्धं ब्रह्मेति निश्चित्य स्वयं स्वानुभवेन च ।
निश्चयं च स्वचिन्मात्रे विलाप्याविक्रियेऽद्वये ॥ ३ ॥

विलापनं च चिद्रूपं बुद्ध्वा केवलरूपतः ।
स्वयं तिष्ठेदयं साक्षाद्ब्रह्मवित्प्रवरो मुनिः ॥ ४ ॥

स्वस्वप्नः स्वप्रबोधेन स्वमात्रं भासते यथा ।
तथा जाग्रत्प्रपञ्चोऽपि स्वयं स्वात्स्वप्रबोधतः ॥ ५ ॥

स्वस्वप्नः स्वातिरेकेण यथा नास्ति तथैव च ।
स्वजाग्रत्स्वातिरेकेण नास्ति तेनाहमद्वयः ॥ ६ ॥

सोपानक्रमतो लब्धं विज्ञानं यस्य सुस्थिरम् ।
तस्य मुक्तिः परा सिद्धा सत्यमेव मयोदितम् ॥ ७ ॥

———

॥ पादुकापञ्चकम् ॥

7768. PĀDUKĀPAÑCAKAM.

अथ पादुकापञ्चकम् ।

जगज्जनिस्थेमलयालयाभ्या-

मगण्यपुण्योदयभाविताभ्याम् ।

त्रयीशिरोजातनिवेदिताभ्यां

नमो नमः श्रीगुरुपादुकाभ्याम् ॥ १ ॥

विपत्तमस्तोमविकर्तनाभ्यां

विशिष्टसंपत्तिविवर्धनाभ्याम् ।

नमज्जनाशेषविशेषदाभ्यां

नमो नमः श्रीगुरुपादुकाभ्याम् ॥ २ ॥

समस्तदुस्तर्ककलङ्कपङ्का-

पनोदनप्रौढजलाशयाभ्याम् ।

निराश्रयाभ्यां निखिलाश्रयाभ्यां

नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ३ ॥

तापत्रयादित्यकरार्दितानां

छायामयीभ्यामतिशीतलाभ्याम् ।

आपन्नसंरक्षणदीक्षिताभ्यां

नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ४ ॥

यतो गिरोऽप्राप्य धिया समस्ता
ह्रिया निवृत्ताः सममेव नित्याः ।
ताभ्यामजेशाच्युतभाविताभ्यां
नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ५ ॥

ये पादुकापञ्चकमादरेण
पठन्ति नित्यं प्रयताः प्रभाते ।
तेषां गृहे नित्यनिवासशीला
श्रीदेशिकेन्द्रस्य कटाक्षलक्ष्मीः ॥ ६ ॥

इति श्रीगुरुपादुकापञ्चकं संपूर्णम् ।

श्रीरामचन्द्रार्पणमस्तु ॥

---

॥ वैराग्यपञ्चकम् ॥

7769. VAIRĀGYAPAÑCAKAM.

जाग्रत्युद्भूतबाह्येन्द्रियविषयसमुल्लाससाक्षी शिवोऽहम् ।
नित्यानन्दस्तुरीयो विमलकलिमलः सर्वसाक्षी शिवोऽहम् ॥ १ ॥

नाहं मनुष्यो न च देवयक्षो
न ब्राह्मणक्षत्रियवैश्यशूद्रः ।
न ब्रह्मचारी न गृही वनस्थो
भिक्षुर्न चाहं निजबोधरूपः ॥ २ ॥

शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते ।
शिवोऽहमिति या बुद्धिस्तदेव ज्ञानमुत्तमम् ॥ ३ ॥

अहमेव परं ब्रह्म मदन्यन्नास्ति किंचन ।
प्रत्यगद्वय एवाहं शिव एव न संशयः ॥ ४ ॥

प्रत्यगात्मपरानन्दगुरोः सर्वस्य साक्षिणः ।
वासुदेवेन्द्रयतिनः कृतार्थोऽहमनुग्रहात् ॥ ५ ॥

इति तत्त्वश्लोकम् ।

इति वैराग्यपञ्चकम् ॥

## ॥ स्वानुभूतिप्रकाशिका ॥

## 7770—72. SVĀNUBHŪTIPRAKĀŚIKĀ.

गौरीपतिपदभजन-

क्रकचविलूनैकविषयपाशोऽहम् ।

देशिकवरकरुणोदित-

परजीवात्मैक्यतत्त्वबोधोऽहम् ॥ १ ॥

प्रशमितनिजमायोऽहं

प्रगलितजगदीशजीवभेदोऽहम् ।

प्रत्यगभिन्नपरोऽहं

प्रविततसुखपूर्णसंविदेवाहम् ॥ २ ॥

समुदस्तागमकोऽहं

विध्वस्ताशेषविधिनिषेधोऽहम् ।

अस्तमिताहन्तोऽहं

निस्तुलरूपवस्तुमात्रोऽहम् ॥ ३ ॥

साक्ष्यहमनपेक्षोऽहं

पक्षविपक्षादिभेदविधुरोऽहम् ।

सूक्ष्मोऽहमक्षरोऽहं

मोक्षानन्दैकसिन्धुरेवाहम् ॥ ४ ॥

कूटस्थचेतनोऽहं

कुक्षिस्थानेकलोककलनोऽहम् ।

एकोऽहमविकलोऽहं
केवलसन्मात्रसारभूतोऽहम् ॥ ५ ॥

वेद्योऽहमागमान्तै-
राद्योऽहं सकलभुवनहृद्योऽहम् ।
विभुरहमनवद्योऽहं
शुभतरभावोऽहमप्रमेयोऽहम् ॥ ६ ॥

शुद्धोऽहमद्वयोऽहं
बुद्धो मुक्तोऽहमकृतात्माहम् ।
शोधितपरतत्त्वोऽहं
बोधानन्दैकमूर्तिरेवाहम् ॥ ७ ॥

शान्तोऽहमान्तरोऽहं
संततभातोऽहमन्तकारोऽहम् ।
शमितान्तत्रितयोऽहं
शाश्वतविज्ञानसमरसात्माहम् ॥ ८ ॥

अजरोहमव्ययोऽहं
निजमहमानिशं स्थितोऽहमचलोहम् ।
अवबोधैकरसोऽहं
कविवरसंसेव्यकेवलात्माहम् ॥ ९ ॥

निस्त्रैगुण्यपदोऽहं
निष्क्रियधामाहमप्रतर्क्योऽहम् ।
निरवयवोऽहमजोऽहं
निर्मलनिर्वाणमूर्तिरेवाहम् ॥ १० ॥

निरवधिनिजबोधोऽहं
निरुपमनिःसीमसत्त्वमात्रोऽहम् ।
परमानन्दघनोऽहं
परशिव एवाहमनिशमभयोऽहम् ॥ ११ ॥

# APPENDIX A.

## INDEX OF AUTHORS.

(Vol. XIII.)

VIII

## APPENDIX B.

## INDEX TO OWNERS OF MSS.

(Vol. XIII)

IX

# APPENDIX C.

## INDEX TO SCRIBES OF MSS.

(Vol. XIII)

## APPENDIX D.

## INDEX TO DATED MSS.

(Vol. XIII)

| | Dates. | Numbers. |
|---|---|---|
| A. D. | 1602 — | 7545 |
| ,, | 1686 — | 7441 |
| ,, | 1720 — | 7599 |

# APPENDIX E.

## INDEX OF WORKS NOTICED IN Vol. XIII.

| NAMES | NUMBERS. |
|---|---|
| Advaitakāmadhenuḥ * | 7526 & 27 |
| Advaitatattvadīpaḥ * | 7534 |
| Advaitadīpikā | 7484-7487 |
| ,, Vyākhyā | 7488 & 89 |
| Advaitamakarandaḥ (Saṭīkaḥ) | 7685 & 86 |
| ,, Vyākhyā—Rasābhivyañjikā | 7637-40 |
| ,, ,, | 7641 |
| Advaitaratnakośavyākhyā * | 7502-04 |
| ,, Ṭippaṇī— Pūraṇī * | 7505-06 |
| Advaitabhūṣaṇam * | 7538 |
| Advaitasiddhiḥ | 7535-39 |
| ,, Vyākhyā—Laghucandrikā | 7540-42 |
| Advaitāmṛtam * | 7543 |
| Adhyāropaṇam * | 7607 |
| Anirvacanīyakhyātisiddhiḥ * | 7624 |
| Anubhavapañcaviṃśatiḥ * | 7751 & 52 |
| Anubhavasopānam * | 7767 |
| Aṣṭāvakrīyam | 7644-51 |
| Asaṅgātmaprakaraṇam * | 7681 |
| Ahamarthavivekaḥ * | 7680 |

* The asterisks indicate that the work is not available in print.

| Names. | Numbers. |
|---|---|
| Paramahamsacaryā * | 7614-18 |
| Paramārthasāraḥ | 7554-57 |
| „ Vyākhyā | 7558 & 59 |
| Pādukāpañcakam * | 7768 |
| Praṇavadīpikā * | 7553 |
| Praṇavārthaprakāśikā * | 7750 |
| „ „ Vyākhyā * | 7619 |
| Pramāṇamālāvyākhyā-Tātparyaṭīkā * | 7451 & 52 |
| Prāṇāyāmaprakāraḥ * | 7781 |
| Bahuvidhamatakhaṇḍanam * | 7634 |
| Bhikṣvaṣṭakam * | 7761 |
| Bodhaprakriyā * | 7697 |
| Bodhasāraḥ * | 7625 |
| Brahmanirāmayāṣṭakam * | 7765 |
| Brahmavidyāsudhārṇavaḥ * | 7560 |
| Brahmānandavilāsaḥ * | 7696 |
| Bhedadhikkāraḥ | 7508-10 |
| „ Vyākhyā-Satkriyā | 7511-13 |
| „ Ṭippaṇī * | 7514 |
| „ Upanyāsaḥ * | 7515 |
| Madhvatantramukhamardanam | 7469-71 |
| Madhvamatavidhvamsaḥ * | 7561 |
| Madhvamatakathanam * | 7660 |
| Manolayaprakaraṇam * | 7763 & 64 |
| Mahāvākyadīkṣā * | 7674 |
| Mahāvākyamantraḥ * | 7726 |
| Mahāvākyaratnāvalī | 7563 & 64 |
| Mahāvākyavivaraṇam | 7565 & 66 |
| „ „ * | 7739-41 |
| „ Vyākhyā * | 7567 |

## ERRATA ET ADDENDA. of VOL. XIII.

| Page | Line | For | Read. |
|---|---|---|---|
| 5491 | Last line | सुक्के | मुक्के |
| 5492 | 19 | Nārārayan | Nārāyan |
| 5491 | 17 | सर्वो | सर्वैः |
| 5497 | 15 | स्थाया | स्थाय |
| 5510 | 19 | or | of |
| 5516 | 22 | Add 'is' before identical | |
| 5521 | 5 | 7456 | 7455 |
| 5528 | 23 | Printed | Not printed. |
| 5559 | 8 | व्याक्यां | व्याख्यां |
| 5561 | 12 | वक्त्रतो | वक्त्रता |
| 5577 | 20 | मातृत्यादि | मातृत्वादि |
| 5608 | 17 | कळ | [कळ] |
| 5607 | 5 | सत्यभि | सत्याभि |
| 5617 | 2 | बोधितां | बोधिता |
| 5628 | 16 | द्यातते | द्योतते |
| 5629 | 12 | Paper | Palm leaf |
| ,, | ,, | Sheets | Leaves |
| ,, | 17 | यत् | तत् |
| 5631 | 2 | Delete 'not' | |
| [illegible] | 4 | संज्ञा | संज्ञ |

| Page | Line | For | Read |
|---|---|---|---|
| 5647 | 6 | वादी | वादिनः |
| 5650 | 15 | P. S. | ? |
| 5657 | 4 | युत | युव |
| 5660 | 11 | व्यासाद्यो | व्यासाद्यैः |
| ,, | 14 | सह्यक्युता | सर्वेश्रुता |
| 5664 | 22 | गोपः | गोपाळ: |
| 5665 | 18 | 7574 | 7571 |
| 5676 | 15 | सन्यक् | सम्यक् |
| 5680 | 8 | आत्मनेना | आत्मनैवा |
| ,, | 9 | मराकार | निराकारं |
| 5686 | 18 | Delete ‘ दित्या ’ | |
| | | Page 5785 | 5758 |
| 5825 | 19 | 6798 | 7698 |
| 5856 | 10 | 7772 | 7727 |
| 5868 | 15 | culled | called |
| 5870 | 8 | प्रवित | प्रवितत |
| 5877 | 4 | ब्रह्मा | ब्रह्मा |
| 5878 | 19 | छिछद्र | छिद्र |
| 5880 | 11 | मन्तव्य | मन्तव्य |
| 5881 | 3 | पद्म | पद्म |
| 5884 | 6 | वेष | एष |
| ,, | 18 | इदभिति | इदमिति |
| 5885 | 21 | ममपश्यत् | मपश्यत् |
| 5891 | last line | बध्द्वा | बद्धा |

| Page | Line | For | Read |
|---|---|---|---|
| 5893 | 4 | स्वप्रे | स्वप्ने |
| 5896 | 6 | पूर्वो | पूर्वो |
| 5897 | 19 | विश्व | विश्व |
| ,, | last line | सर्वे | सर्वे |
| 5902 | 16 | शक्त्मादयो | शक्रादयो |
| 5910 | 15 | मावना | भावना |
| 5924 | 17 | स्वीय | स्वीय |
| 5925 | 8 | रटन्स्त | रटन्तः |
| 5925 | 16 | भिन्तां | भिन्तां |
| 5926 | 10 | ब्रह्मणे | ब्रह्मणे |
| 5927 | 13 | मूल | मूल |
| 5931 | 5 | दीन्वि | दीप्ति |
| 5934 | 8 | मेव | मेव |
| 5935 | 4 | मृही | गृही |
| 5936 | 15 | साक्ष्यहं | साक्ष्यह |